

# सामवेद-संहिता।

अनेकवैदिकपण्डितानां साहाय्येन विविधप्राचीनलिखितपुस्तकपाठानुसारेण
भट्टाचार्येण श्रीपादशर्मणा दामोदरभट्टसूनुना सान्तवलेकरकुलजेन
संशोधिता।



सा च
औन्धराजधान्यां
भारतमुद्रणालये मुद्रयित्वा स्वाध्याय-मण्डलद्वारा प्रकाशिता।



विक्रमीय संवत् १९९६; शालीवाहनशकः १८६१

मूल्यं रूप्यकत्रयम्।

# सामवेदानुक्रमः ।





## सामसूचीनामनुक्रमः ।



## स्वर्गीय लाला शिवलालजी ।

[भूतपूर्व उपदेशक श्रीमद्दयानन्द अनाथालय अजमेर तथा वैश्य-महासभा मेरठ की पुण्यस्मृतिमें सामवेद-मुद्रणार्थ श्री० भारतभूषण गुप्त, हैड क्लर्क टी० एस्० ऑफिस, अजमेर ने ५००) रु० का दान धर्मभावसे दिया है।]



# सामवेदविषयकः प्रस्तावः।



## सामवेदस्य विभूतिमत्त्वम्।

श्रीमता भगवता वासुदेवेन श्रीमद्भगवद्गीतायां विभूतिवर्णनप्रसङ्गे 'वेदानां सामवेदोऽस्मि' (भ० गी० १०।२२) इत्युक्तम्। दर्शितं च तत्र यद्वेदानां मध्ये सामवेदो भगवद्विभूतिरिति। महाभारतेऽप्यनुशासनपर्वणि (१४।३१७) 'सामवेदश्च वेदानां, यजुषां शतरुद्रियं' इति सामवेदप्रशंसोपलभ्यते। यत्तु भगवद्गीतायां 'प्रणवः सर्ववेदेषु' (गी० ७।८) तथानुगीतायां 'ओंकारः सर्ववेदानां' (म०अश्व०४४।६)इति ओंकारस्य सर्ववेदश्रेष्ठत्वं प्रतिपाद्यते, न तत्पूर्वोक्तवचनविरोधि, ओंकारस्योद्गीथपर्यायवाचित्वाद्, उद्गीथस्य च सामवेदसारभूतत्वात्। तथोक्तं छान्दोग्ये-'साम्न उद्गीथो रसः'(छां० १।१।२) इति। को नाम सामवेदेऽस्मिन् विशेषोऽस्ति, येन तस्य भगवद्विभूतिरूपत्वमितरवेदाऽसाधारणं सिध्येत्? उच्यते—

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्॥ (भ० गी० १०।४१)

इत्युक्तं विभूतिलक्षणम्। तद्यथा, यत्र यत्र विशेषेण भूतिमत्त्वं, श्रीमत्त्वं, समूर्जितत्वं च दृश्येत, तत्र तत्र भगवत्तेजोंऽशसंभूतिरनुमातुं शक्येति। एवमेवात्र सामवेदे शब्दब्रह्मणो विशेषेण भूतिमत्त्वं गानरूपत्वात्सामवेदस्य. श्रिया युक्तत्वं च तानसंयोगान्मन्त्रपर्वणां, समूर्जितत्वं चानुसंधानाद्विकार-विश्लेषण-विकर्षणा-ऽभ्यास-विराम-स्तोभानां सुतरां समनुभूयते। यथा छन्दो वाक्यप्रयोगेषु, काव्यं छन्दस्सु, गानं काव्येषु, तानसंलापनं च गानेषु विशिष्यते; तथैव वेदाः सर्वेषु वाङ्मयेषु, सामवेदोऽखिलेषु वेदेषु, गानं च सामसु विशिष्यते। उक्तं च यथा- 'वाच ऋग्रसः, ऋचः साम रसः, साम्न उद्गीथो रसः'। (छां० उ० १।१।२) इति। अत एवैतस्य सामवेदस्य विभूतिमत्त्वं युक्तमेवोक्तम्। तथैव- 'सामवेद एव पुष्पम्।' (छां० उ० ३।३।१) यथा वृक्षस्य पुष्पमेव रमणीयं रूपं सौन्दर्यातिशयात्, तथैव सामवेदोऽपि वेदवृक्षस्य पुष्पमेव तस्यापूर्वगानमयत्वात्। एतेनास्य विभूतिमत्त्वमपि सिद्धयति।

## को नाम सामवेदः?

अत्र पृच्छयते को नाम सामवेद इति। किं नाम मन्त्रात्मक एव सामवेद, आहोस्विद्गानरूप एवेति। छान्दोग्योपनिषदि 'या ऋक् तत् साम'। (छां० उ० १।३।४) इत्युक्त्वा प्रदर्शितं यदृचामेव संग्रहः सामवेद इति। 'ऋचि अध्यूढं साम' (छां० उ० १।६।१) इति वचनमपि तदेव द्रढयति। अत्र चैवमुच्यते ऋगाश्रितमेव भवति साम, नान्याश्रितमिति। ऋक्साम्नोर्दम्पतित्वमपि वर्णितमथर्ववेदे बृहदारण्यकोपनिषदि च, यथा—

अमोऽहमस्मि सा त्वं, सामाहमस्म्यृक्त्वं, द्यौरहं पृथिवी त्वं, ताविह संभवाव, प्रजामाजनयावहै।

(अथर्व० १४।२।७१; ऐतरेय-ब्रा० ८।२७; बृ० उ० ६।४।२०)

अहं अमसंज्ञकः पतिरूपोऽस्मि, त्वं च ऋग्रूपा पत्नीति । साम्नो निर्वचनमपि तदेव दर्शयति यथा- 'सा च अमश्चेति तत्साम्नः सामत्वं ।' ( बृ० उ० १।३।२२ ) सा नाम ऋक्, तया सह संबद्धः अमो नाम स्वरः षड्जर्षभादितानरूपो यत्र वर्तते, तत् सामेति । अनेन साम्नो विशेषत्वं तस्य गानरूपत्वात् सूच्यते । ऋग्यजुरथर्ववेदाः केवलं मन्त्रमयाः, न तथा सामवेदः, स तु ऋगाश्रयभूतोऽपि प्राधान्येन गानमय एवेति । तथा चोक्तम्—

'गीतिषु सामाख्या' ( जै० सू० २।१।३६ ) इति सामसंज्ञा मन्त्राणां गीतिष्वेव भवति, न केवलेषु मन्त्रेषु, न वा केवलेषु गानेषु इत्येवमाह जैमिनिः । 'का साम्नो गतिरिति ? स्वर इति होवाच ।' इति छान्दोग्योपनिषदि (१।८।४) शालावत्यदाल्भ्यसंवादे गदितम् । 'तस्य हैतस्य साम्नो यः स्वं वेद, भवति हास्य स्वं, तस्य स्वर एव स्वम् ।' (बृ० उ० १।३।२५ ) इति वचनमपि तदेव कथयति, यत् साम्नः स्वर एव स्वं निजं रूपमिति । एषां सामस्वराणां मण्डलं नारदो व्याकरोति-

सप्त स्वराः, त्रयो ग्रामा, मूर्छनास्त्वेकविंशतिः । ताना एकोनपञ्चाशत्, इत्येतत्स्वरमण्डलम् ॥

( नारदीयशिक्षायाम् )

सामस्वराणां निर्णयो नारदीयशिक्षायां सामविधानब्राह्मणे चैवं दृश्यते-

यः सामगानां प्रथमः स वेणोर्मध्यमः स्वरः । यो द्वितीयः स गान्धारः, तृतीयस्त्वृषभः स्मृतः ॥
चतुर्थः षड्ज इत्याहुः, पञ्चमो धैवतो भवेत् । षष्ठो निषादो विज्ञेयः, सप्तमः पञ्चमः स्मृतः ॥

( नारदीयशिक्षायाम् )

अत्र धैवतनिषादयोः स्थानव्युत्क्रमो दृश्यते; स नारदशिक्षायामुक्तोऽपि चिन्त्य एव । अस्तु । एते सामस्वराः सामाङ्कानुसारेणैवं भवन्ति-

| | | | | | |
|---|---|---|---|---|---|
| अतिक्रुष्टः | | पञ्चमः | । प । | ( क्रुष्टः ) तद्योऽसौ क्रुष्टतम इव साम्नः स्वरस्तं देवा उपजीवन्ति | । प । |
| १. प्रथमः | ( वेणोः ) | मध्यमः | । म । | १. योऽवरेषां प्रथमस्तं मनुष्याः | । म । |
| २. द्वितीयः | | गान्धारः | । ग । | २. यो द्वितीयस्तं गन्धर्वाप्सरसः | । ग । |
| ३. तृतीयः | | ऋषभः | । रे । | ३. यस्तृतीयस्तं पशवः ( वृषभः, ऋषभः ) | । रे । |
| ४. चतुर्थः | | षड्जः | । सा । | ४. यश्चतुर्थस्तं पितरो ये चाण्डेषु शेरते | । सा । |
| ५. पञ्चमः, ( मन्द्रः ) | | निषादः | । नि । | ५. यः पञ्चमस्तमसुररक्षांसि, ( निषादः ) | । नि । |
| ६. षष्ठः ( अतिस्वार्यः ) | | धैवतः | । ध । | ( अन्त्यः ) योऽन्त्यस्तमोषधयो वनस्पतयश्चान्यज्जगत् | । ध । |
| ७. सप्तमः | | पञ्चमः | । प । | | |

( सामविधानब्राह्मणे )

सामगानस्यैतत्खलु स्वरमण्डलं, यस्मिन् साम गीयत उद्गातृभिः । अथ विकार-विश्लेषण-विकर्षणा-ऽभ्यास-विराम-स्तोभाख्याः षट् सामविकारा भवन्ति । त एते—

१. विकारो यथा 'अग्ने' इत्यस्य 'ओग्नायि' इति,
२. विश्लेषणं यथा 'वीतये' इत्यस्य 'वोयि तोयाऽ२यि' इति,
३. विकर्षणं यथा 'ये' इत्यस्य 'याऽ२३यि' इति,
४. अभ्यास इति पुनःपुनरुच्चारो यथा 'तोयाऽ२यि । तोयाऽ२यि' इति,
५. विरामो यथा 'गृणानो हव्यदातये' इत्यस्य 'गृणानोह्व । व्यदातये' इति । 'गृणानोह्व' इत्यस्य पदान्तत्वाभावेऽपि गानसौकर्यार्थं शब्दमध्य एव विरामादस्य विरामसंज्ञा भवति ।
६. स्तोभ ऋग्विलक्षणो वर्णो, यथा 'औहोवा । हाउ ।' इत्यादिः ।

एतैः षट्सामविकारैः संवर्धितं साम उक्तपूर्वे स्वरमण्डले गीयते । अत एवोच्यते सामवेदो गानमयो, न तु केवलं मन्त्रमय इति ।

को नामात्र सामवेदः, य एष इदानीं पाठकानां पुरस्तात्पुस्तकरूपेणावस्थाप्यते सोऽथवा गानात्मकः कश्चिदन्यः? उच्यते, य एतेन ग्रन्थरूपेण प्रस्तूयते, स केवलं ऋचां सङ्ग्रहभूतो मन्त्रमय एव, नैष गानमयः । अस्मिन्ग्रन्थे न विद्यत एकमपि गानम् । सामगानस्य योनिमन्त्रा एते । एतान्मन्त्रानाश्रित्यैव पूज्यपादैरनेकैर्ऋषिभिः सहस्रशः प्रदर्शितान्यनेकविधानि गानानि, तानि तु तेषामृषीणां नामभिरेवेदानींपर्यन्तं व्यवह्रियन्ते, यथा '**गोतमस्य पर्कं, कश्यपस्य बार्हिषम्**' इत्यादीनि । तानि तु सर्वाण्येव यथाक्रमं ग्रामारण्योहोह्येषु प्रकरणेषु सत्वरमेव मुद्रापयिष्यन्ते । तान्येव सामानीत्युच्यन्ते । तानि तु मन्त्रेभ्यः पृथक्तराण्येव, यथा—

ऋग्वेदमन्त्रः ।

अग्न आ याहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥ ( ऋ० ६।१६।१० )

सामवेदमन्त्रः ( सामयोनिः )

२३ १ २ ३१२ ३ २ ३१२ १ २र ३१२
अग्न आ याहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥ ( साम० १।१।१।१ )

अस्य गानानि ।

( १ ) गोतमस्य पर्कम् ।

४ २र र^ १ २ — १ — १ २ २र १ — १ —
ओग्नाई । आयाहीऽ३ । वोइतोयाऽ२इ । तोयाऽ२इ । गृणानो ह । व्यदातोयाऽ२इ । तोयाऽ२इ ।
१ २र १ ^ ३ ५र र ३
नाइ होतासाऽ२ ३ । त्साऽ२इ । बाऽ२ ३ ४औहोवा । हीऽ२ ३ ४षी ॥१॥

( २ ) कश्यपस्य बार्हिषम् ।

४ ५ ४र ५र ४ १ र र र २ १र र र २ १ २
अग्न आयाही वी । तया इ । गृणानो हव्यदाताऽ२ ३याइ । नि होता सत्सि बर्हाऽ२ ३इषी ।
१ ^ ३ ^ ५र र २^ १ १ १ १
बर्हाऽ२इषाऽ२ ३ ४औहोवा । बर्हीऽ३षीऽ२ ३ ४ ५ ॥२॥

( ३ ) गोतमस्य पर्कम् ।

४ ५ ४र ५र ४ ४ १र र २ २ २ ^ ३ ५ १
अग्न आयाहि । वाऽ५इतयाइ । गृणानो हव्यदाऽ१ताऽ३ये । नि होताऽ२३ ४सा । त्साऽ२ ३ ४
२ १ ५ ५
इबाऽ३ । हाऽ२ ३ ४इषोऽ६हाइ ॥३॥

अत्र प्रथमा ऋक्, सैव सामवेदे गानोपबृंहणार्थं सङ्गृहीता, अत्र साममन्त्रे स्थिता अङ्काः उदात्तानुदात्तस्वरितानां बोधका एव, नैते गानस्वराः । यत्र ऋग्वेदेऽनुदात्तचिह्नमधोरेखया दर्शितं, तदेव सामवेदे '३' इत्येवं त्रिसंज्ञकेनाङ्केन चिह्नितम्, तथैव च ऋग्वेदे अनुदात्तात्पर उदात्तस्तस्य नैव किञ्चिदपि चिह्नं, स तु '१' इत्येकसंज्ञकेनैवाङ्केन प्रदर्श्यते सामवेदे । ऋग्वेदे तृतीयस्य स्वरितस्य ऊर्ध्वरेखैव चिह्नं, तत्तु सामवेदे '२' इति द्विसंज्ञकेनाङ्केन प्रदर्श्यते । यथा-

अग्न आ याहि वीतये

२३ १ २ ३१२
अग्न आ याहि वीतये

उअ उ स्वप्र अउस्व

( उ ) उदात्तः, ( अ ) अनुदात्तः, ( स्व ) स्वरितः, ( प्र ) प्रचयः, ( स ) सन्नतरः इति स्वराः । प्रचयस्य चिह्नं नास्ति। सन्नतररूपोऽन्तिमोऽनुदात्तोऽनुदात्तवदधोरेखयैव प्रदर्श्यते। तौ प्रचयसन्नतरौ तु स्वरितमेव यथाक्रममनुगच्छतः यत्र भवतः।

एवं उभयो ऋक्सामयोः स्वरचिह्नप्रदर्शनपद्धतिभेदेऽपि न तत्रोदात्तादिस्वरभेदोऽस्ति। 'या ऋक् तदेव साम' इति छान्दोग्यवचनमत्रैव सुतरां संगच्छते। नैते सामाङ्का गानार्थं समभिप्रयुक्ताः, किन्तु उदात्तानुदात्तस्वरितदर्शनार्थमेव सामाक्षराणामुपरि लिखिता भवन्तीति विज्ञेयम्।

सामगानं तु इतोऽप्यन्यदेव। अस्मादेव एकस्मादृङ्मन्त्रात् **'गौतमस्य द्वे, कश्यपस्यैकं'** एवं सामत्रयं संपद्यते, तत् सामगानग्रन्थेषु प्रसिद्धम्। तदेतत्सामगानं तानालापसंलापस्तोभयुक्तत्वात् सप्तस्वरसंयुक्तत्वाच्च गानसंज्ञां लभते। एतदेव साम यद् **'ऋच्यध्यूढं साम गीयत'** इत्युक्तपूर्वम्। अत एवोच्यते एष सामवेदः सामगानानां योनिभूतानां मन्त्राणां केवलं संग्रह एव, स **'सामयोनिमन्त्रसंहिता'** इति वक्तव्ये **'सामवेदसंहिता'** इति संक्षेपेणोच्यते।

## उत्तरार्चिकस्य पूर्वार्चिकेन संबन्धः।

सामवेदस्य पूर्वार्चिकोत्तरार्चिकाख्यौ द्वौ भेदौ। तत्र पूर्वार्चिके ५८५ एकर्चानि सूक्तानि विद्यन्ते। तत्रोत्तरार्चिकस्थानि पूर्वार्चिकपठितान्येकर्चानि सूक्तानि 'योनि'–नाम्ना व्यवह्रियन्ते। एता एव योनीराश्रित्याधोनिर्दिष्टेषु गानग्रन्थेषु नानास्वरक्रमपूर्वकं गानमुपवर्णितम्। यः कोऽपि स्वरक्रमः पूर्वार्चिकपठिताया योनेर्भवति, तेनैव स्वरक्रमेण योनिभूतर्क्संयुक्तानामुत्तरार्चिकपठितानां ऋचां गानं भवति।

तत्र पूर्वार्चिके षट् प्रपाठकाः, प्रत्येकं प्रपाठके च द्वावर्धौ, तयोश्च १० दशतयः। यद्यपि दशर्चामेका दशतिः सामान्यतो भवति, तथापि कासुचिद्दशतिषु न्यूनत्वमाधिक्यं वोपलभ्यते। अधस्ताच्च सूची दीयते—

| | | | | |
|---|---|---|---|---|
| प्रपा० १ | =२अर्धौ | =१० दशतयः | ( तत्र प्रथमार्धे तृतीयदशत्यां १४ ऋचः, द्वितीयार्धे प्रथमदशत्यामष्टौ, तृतीयदशत्यामष्टौ, पञ्चमदशत्यां षट्, शेषासु १० ) योगेन | = ९६ऋचः। |
| ,, २ | = ,, | ,, | ( प्रथमार्धे द्वितीयदशत्यामष्टौ, द्वितीयार्धे पञ्चमदशत्यां नव ) | = ९७ |
| ,, ३ | = ,, | ,, | ( प्रथमार्धे तृतीयदशत्यां नव ) | = ९९ |
| ,, ४ | = ,, | ,, | ( प्रथमार्धे चतुर्थदशत्यां नव, द्वितीयार्धे द्वितीयदशत्यामष्टौ, चतुर्थदशत्यामेकादश ) | = ९९ |
| ,, ५ | = ,, | ,, | ( प्रथमार्धे प्रथमदशत्यामष्टौ, चतुर्थदशत्यामष्टौ ) | = ९८ |
| ,, ६ | = ,, | ९ दशतयः | ( प्रथमार्धे द्वितीयदशत्यां १४, तृतीयदशत्यां १२, पञ्चम्यां दशत्यां १२, द्वितीयार्धे प्रथमदशत्यां नव, द्वितीयदशत्यां १२, तृतीयदशत्यां १२, चतुर्थदशत्यां ८ ) | = ९६ |
| | | | | ९९ |
| | | | सम्पूर्णयोगः | =५८५ |

उत्तरार्चिके च नव प्रपाठकाः, तेषु प्रथमानां पञ्चानां द्वौद्वावर्धौ। शेषाणां चतुर्णां प्रपाठकानां तु प्रत्येकं त्रयोऽर्धाः। केषांचिन्मतानुसारं तु ११ प्रपाठकाः, प्रत्येकं द्वयोर्द्वयोरर्धयोर्विभक्ताः। एवं २२ अर्धाः संजायन्ते। अर्धाश्च खण्डेषु विभक्ताः। अग्रत उत्तरार्चिकसूक्तानां सूची दीयते—

| प्रपाठकाः | अर्धाः | खण्डाः | सूक्तानि | | योगेन ऋचः |
|---|---|---|---|---|---|
| १ | १ | ६ | २३ | ( तत्र सूक्तेषु १६ तृचानि, ७ सूक्तेषु च द्वे द्वे ऋचौ ) | ६२ |
| | २ | ६ | २२ | (१८ तृचानि, ४ सूक्तेषु च द्वे द्वे ऋचौ ) | ६२ |
| २ | १ | ६ | १९ | (१ सूक्ते चतस्रः, १५ तृचानि, ३ सूक्तेषु च द्वे द्वे ) | ५५ |
| | २ | ६ | १९ | (१ सूक्ते पञ्च, ,, ,, ,, ) | ५६ |
| ३ | १ | ७ | २२ | (२ सूक्तयोः षट्, १७ तृचानि, ३ सूक्तेषु च द्वे द्वे) | ६९ |
| | २ | ७ | २३ | ( ,, सप्त, १ सूक्ते चतस्रः, १८ तृचानि, २ सूक्तयोः द्वे द्वे) | ७६ |
| ४ | १ | ७ | २४ | (२ सूक्तयोर्दश, १ सूक्ते चतस्रः, १८ तृचानि, ,, एकमेकर्चम् ) | ८३ |
| | २ | ६ | १४ | (२ सूक्तयोर्द्वादश, ११ तृचानि, १ सूक्ते द्वे) | ५९ |
| ५ | १ | ९ | २० | (३ नवर्चानि, १ पञ्चर्चम्, १२ तृचानि, २ सूक्तयोः द्वे द्वे, २ द्वे चतुष्के ) | ८० |
| | २ | १२ | २३ | (१ दशर्चम्, १ अष्टर्चम्, ५ षडर्चानि, १४ तृचानि, २ सूक्तयोः द्वे द्वे ) | ९४ |
| ६ | १ | ३ | ११ | (१ सूक्ते चतस्रः, ८ तृचानि, २ सूक्तयोः द्वे द्वे) | ३२ |
| | २ | ६ | २० | ( ,, १४ तृचानि, ५ सूक्तेषु ,, ) | ५६ |
| | ३ | ६ | १८ | (१ षडर्चम्, १ पंचर्चम्, १ सूक्ते चतस्रः, ११ तृचानि, २सूक्तयोः द्वे द्वे, २एकर्चे) | ५४ |
| ७ | १ | ४ | १६ | (१ पंर्चचम्, १२ तृचानि, २ सूक्तयोः द्वे द्वे, १ एकर्चम्) | ४६ |
| | २ | ४ | १४ | (१० तृचानि, ४ सूक्तेषु द्वे द्वे) | ३८ |
| | ३ | ४ | २१ | (१ सूक्ते चतस्रः, ६ तृचानि, ८ सूक्तेषु द्वे द्वे, ६ एकर्चानि) | ४४ |
| ८ | १ | ४ | १४ | (१२ तृचानि, २ सूक्तयोः द्वे द्वे) | ४० |
| | २ | ४ | १९ | (१ षडर्चम्, १२ तृचानि, ६ सूक्तेषु द्वे द्वे) | ५४ |
| | ३ | ५ | १८ | (२ सूक्तयोः चतस्रः, १४ तृचानि, २ सूक्तयोः द्वे द्वे ) | ५४ |
| ९ | १ | ४तथा पंचम-खंडस्यैकं सूक्तम् | १८ | (१५ तृचानि, ३ सूक्तेषु द्वे द्वे) | ५१ |
| | २ | २ खंडौ, तथा पंचमस्यैकं सूक्तम् | | ( एवं नवमे प्रपाठके, प्रथमद्वितीयार्धयोः ७ खण्डाः ) | |
| | | | १३ | (१ षड्चम्, ७ तृचानि, १ सूक्ते द्वे, ४ एकर्चानि) | ३३ |
| | ३ | १ | ९ | ( ९ तृचानि ) | २७ |
| ९ प्रपाठकाः | २२ अर्धाः | ११९ खण्डाः | ४०० सूक्तानि | | योगेन १२२५ |

उत्तरार्चिके च ४०० सूक्तानि। तेषु १३ एकर्चानि, ६६ सूक्तेषु द्वे ऋचौ, २८७ सूक्तेषु तिस्रः, ९ सूक्तेषु चतस्रः, ४ सूक्तेषु पञ्च, १० सूक्तेषु षट्, २ सूक्तयोः सप्त, १ सूक्ते अष्टौ, ३ सूक्तेषु नव, ३ सूक्तेषु दश, २ सूक्तयोश्च द्वादश ऋचो विद्यन्ते। अस्यां गणनायां च द्वयोः सूक्तयोर्द्वयोश्चर्चोर्न्यूनत्वं केषुचिद्ग्रंथेष्वाधिक्यं च दृश्यते।

अत्रेदं विचारणीयं यदुत्तरार्चिके २८७ तृचानि विद्यन्ते। एषां मध्ये केवलं २२६ तृचानां प्रथमा ऋचः पूर्वार्चिक उपलभ्यन्ते। अवशिष्टानां ६१ तृचानां संबन्धिन्यः प्रथमा ऋचः पूर्वार्चिके नैवोपलभ्यन्ते। कारणं चेदमस्य यदिमाः ६१ उत्तरार्चिकयोनयः प्रातःसवने प्रयुज्यन्ते, गायत्रेण च रागेण गीयन्ते। उक्तं च "गायत्रं वै प्रातःसवनम्" (ऐतरेय-ब्राह्मणे, २.८)। यासां २२६ तृचयोनीनां यज्ञान्तरे सवनान्तरे वा प्रयोगस्तासामेवारम्भिका ऋचः पूर्वार्चिके संगृहीताः।

सामवेदस्य पौरुषेयापौरुषेयवादे तु योनिमन्त्राणामपौरुषेयत्वं, सामगानानां तु पौरुषेयत्वं कैश्चित्कल्प्यते। वस्तुतस्तु योनिमन्त्राणां तदुत्पन्नसाम्नां चापौरुषेयत्वमेव प्रतिपाद्यते मीमांसकैः। उत्तराग्रन्थगततृच आद्यायामृचि समुत्पन्नं योनि-

( उ ) उदात्तः, ( अ ) अनुदात्तः, ( स्व ) स्वरितः, ( प्र ) प्रचयः, ( स ) सन्नतरः इति स्वराः। प्रचयस्य चिह्नं नास्ति। सन्नतररूपोऽन्तिमोऽनुदात्तोऽनुदात्तवदधोरेषयैव प्रदर्श्यते। तौ प्रचयसन्नतरौ तु स्वरितमेव यथाक्रममनुगच्छतः यत्र भवतः।

एवं उभयो ऋक्सामयोः स्वरचिह्नप्रदर्शनपद्धतिभेदेऽपि न तत्रोदात्तादिस्वरभेदोऽस्ति। 'या ऋक् तदेव साम' इति छान्दोग्यवचनमत्रैव सुतरां संगच्छते। नैते सामाङ्का गानार्थं समभिप्रयुक्ताः, किन्तु उदात्तानुदात्तस्वरितदर्शनार्थमेव सामाक्षराणामुपरि लिखिता भवन्तीति विज्ञेयम्।

सामगानं तु इतोऽप्यन्यदेव। अस्मादेव एकस्मादङ्मन्त्रात् **'गौतमस्य द्वे, कश्यपस्यैकं'** एवं सामत्रयं संपद्यते, तत् सामगानग्रन्थेषु प्रसिद्धम्। तदेतत्सामगानं तानालापसंलापस्तोभयुक्तत्वात् सप्तस्वरसंयुक्तत्वाच्च गानसंज्ञां लभते। एतदेव साम यद् **'ऋच्यध्यूढं साम गीयत'** इत्युक्तपूर्वम्। अत एवोच्यते एष सामवेदः सामगानानां योनिभूतानां मन्त्राणां केवलं संग्रह एव, स **'सामयोनिमन्त्रसंहिता'** इति वक्तव्ये **'सामवेदसंहिता'** इति संक्षेपेणोच्यते।

## उत्तरार्चिकस्य पूर्वार्चिकेन संबन्धः।

सामवेदस्य पूर्वार्चिकोत्तरार्चिकाख्यौ द्वौ भेदौ। तत्र पूर्वार्चिके ५८५ एकर्चानि सूक्तानि विद्यन्ते। तत्रोत्तरार्चिकस्थानि पूर्वार्चिकपठितान्येकर्चानि सूक्तानि 'योनि'-नाम्ना व्यवह्रियन्ते। एता एव योनीराश्रित्याधोनिर्दिष्टेषु गानग्रन्थेषु नानास्वरक्रमपूर्वकं गानमुपवर्णितम्। यः कोऽपि स्वरक्रमः पूर्वार्चिकपठिताया योनेर्भवति, तेनैव स्वरक्रमेण योनिभूतर्क्संयुक्तानामुत्तरार्चिकपठितानां ऋचां गानं भवति।

तत्र पूर्वार्चिके षट् प्रपाठकाः, प्रत्येकं प्रपाठके च द्वावर्धौ, तयोश्च १० दशतयः। यद्यपि दशर्चामेका दशतिः सामान्यतो भवति, तथापि कासुचिद्दशतिषु न्यूनत्वमाधिक्यं वोपलभ्यते। अधस्ताच्च सूची दीयते—

| | | | | |
|---|---|---|---|---|
| प्रपा० १ | =२अर्धौ | =१० दशतयः | ( तत्र प्रथमार्धे तृतीयदशत्यां १४ ऋचः, द्वितीयार्धे प्रथमदशत्यामष्टौ, तृतीयदशत्यामष्टौ, पञ्चमदशत्यां षट्, शेषासु १० ) योगेन | = ९६ऋचः। |
| ,, २ | = ,, | ,, | ( प्रथमार्धे द्वितीयदशत्यामष्टौ, द्वितीयार्धे पञ्चमदशत्यां नव ) | = ९७ |
| ,, ३ | = ,, | ,, | ( प्रथमार्धे तृतीयदशत्यां नव ) | = ९९ |
| ,, ४ | = ,, | ,, | ( प्रथमार्धे चतुर्थदशत्यां नव, द्वितीयार्धे द्वितीयदशत्यामष्टौ, चतुर्थदशत्यामेकादश ) | = ९९ |
| ,, ५ | = ,, | ,, | ( प्रथमार्धे प्रथमदशत्यामष्टौ, चतुर्थदशत्यामष्टौ ) | = ९८ |
| ,, ६ | = ,, | ९ दशतयः | ( प्रथमार्धे द्वितीयदशत्यां १४, तृतीयदशत्यां १२, पञ्चम्यां दशत्यां १२, द्वितीयार्धे प्रथमदशत्यां नव, द्वितीयदशत्यां १२, तृतीयदशत्यां १२, चतुर्थदशत्यां ८ ) | = ९६ |
| | | | | ९९ |
| | | | सम्पूर्णयोगः | =५८५ |

उत्तरार्चिके च नव प्रपाठकाः, तेषु प्रथमानां पञ्चानां द्वौद्वावर्धौ। शेषाणां चतुर्णां प्रपाठकानां तु प्रत्येकं त्रयोऽर्धाः। केषांचिन्मतानुसारं तु ११ प्रपाठकाः, प्रत्येकं द्वयोर्द्वयोरर्धयोर्विभक्ताः। एवं २२ अर्धाः संजायन्ते। अर्धाश्च खण्डेषु विभक्ताः। अग्रत उत्तरार्चिकसूक्तानां सूची दीयते—

| प्रपाठकाः | अर्धाः | खण्डाः | सूक्तानि | | योगेन ऋचः |
|---|---|---|---|---|---|
| १ | १ | ६ | २३ | ( तत्र सूक्तेषु १६ तृचानि, ७ सूक्तेषु च द्वे द्वे ऋचौ ) | ६२ |
| | २ | ६ | २२ | (१८ तृचानि, ४ सूक्तेषु च द्वे द्वे ऋचौ ) | ६२ |
| २ | १ | ६ | १९ | (१ सूक्ते चतस्रः, १५ तृचानि, ३ सूक्तेषु च द्वे द्वे ) | ५५ |
| | २ | ६ | १९ | (१ सूक्ते पञ्च, ,, ,, ,, ) | ५६ |
| ३ | १ | ७ | २२ | (२ सूक्तयोः षट्, १७ तृचानि, ३ सूक्तेषु च द्वे द्वे) | ६९ |
| | २ | ७ | २३ | ( ,, सप्त, १ सूक्ते चतस्रः, १८ तृचानि, २ सूक्तयोः द्वे द्वे) | ७६ |
| ४ | १ | ७ | २४ | (२ सूक्तयोर्दश, १ सूक्ते चतस्रः, १८ तृचानि, ,, एकमेकर्चम् ) | ८३ |
| | २ | ६ | १४ | (२ सूक्तयोर्द्वादश, ११ तृचानि, १ सूक्ते द्वे) | ५९ |
| ५ | १ | ९ | २० | (३ नवर्चानि, १ पञ्चर्चम्, १२ तृचानि, २ सूक्तयोः द्वे द्वे, २ द्वे चतुष्के) | ८० |
| | २ | १२ | २३ | (१ दशर्चम्, १ अष्टर्चम्, ५ षडर्चानि, १४ तृचानि, २ सूक्तयोः द्वे द्वे ) | ९४ |
| ६ | १ | ३ | ११ | (१ सूक्ते चतस्रः, ८ तृचानि, २ सूक्तयोः द्वे द्वे) | ३२ |
| | २ | ६ | २० | ( ,, १४ तृचानि, ५ सूक्तेषु ,, ) | ५६ |
| | ३ | ६ | १८ | (१ षडर्चम्, १ पंचर्चम्, १ सूक्ते चतस्रः, ११ तृचानि, २सूक्तयोः द्वे द्वे, २एकर्चे) | ५४ |
| ७ | १ | ४ | १६ | (१ पंर्चचम्, १२ तृचानि, २ सूक्तयोः द्वे द्वे, १ एकर्चम्) | ४६ |
| | २ | ४ | १४ | (१० तृचानि, ४ सूक्तेषु द्वे द्वे) | ३८ |
| | ३ | ४ | २१ | (१ सूक्ते चतस्रः, ६ तृचानि, ८ सूक्तेषु द्वे द्वे, ६ एकर्चानि) | ४४ |
| ८ | १ | ४ | १४ | (१२ तृचानि, २ सूक्तयोः द्वे द्वे) | ४० |
| | २ | ४ | १९ | (१ षडर्चम्, १२ तृचानि, ६ सूक्तेषु द्वे द्वे) | ५४ |
| | ३ | ५ | १८ | (२ सूक्तयोः चतस्रः, १४ तृचानि, २ सूक्तयोः द्वे द्वे ) | ५४ |
| ९ | १ | ४तथा पंचमखंडस्यैकं सूक्तम् | १८ | (१५ तृचानि, ३ सूक्तेषु द्वे द्वे) | ५१ |
| | २ | २ खंडौ, तथा पंचमस्यैकं सूक्तम् (एवं नवमे प्रपाठके, प्रथमद्वितीयार्धयोः ७ खण्डाः ) | १३ | (१ षडृचम्, ७ तृचानि, १ सूक्ते द्वे, ४ एकर्चानि) | ३३ |
| | ३ | १ | ९ | ( ९ तृचानि ) | २७ |
| ९ प्रपाठकाः | २२ अर्धाः | ११९ खण्डाः | ४०० सूक्तानि | | योगेन १२२५ |

उत्तरार्चिके च ४०० सूक्तानि। तेषु १३ एकर्चानि, ६६ सूक्तेषु द्वे ऋचौ, २८७ सूक्तेषु तिस्रः, ९ सूक्तेषु चतस्रः, ४ सूक्तेषु पञ्च, १० सूक्तेषु षट्, २ सूक्तयोः सप्त, १ सूक्ते अष्टौ, ३ सूक्तेषु नव, ३ सूक्तेषु दश, २ सूक्तयोश्च द्वादश ऋचो विद्यन्ते। अस्यां गणनायां च द्वयोः सूक्तयोर्द्वयोश्चर्चोर्न्यूनत्वं केषुचिद्ग्रंथेष्वाधिक्यं च दृश्यते ।

अत्रेदं विचारणीयं यदुत्तरार्चिके २८७ तृचानि विद्यन्ते। एषां मध्ये केवलं २२६ तृचानां प्रथमा ऋचः पूर्वार्चिक उपलभ्यन्ते । अवशिष्टानां ६१ तृचानां संबन्धिन्यः प्रथमा ऋचः पूर्वार्चिके नैवोपलभ्यन्ते। कारणं चेदमस्य यदिमाः ६१ उत्तरार्चिकयोनयः प्रातःसवने प्रयुज्यन्ते, गायत्रेण च रागेण गीयन्ते । उक्तं च "गायत्रं वै प्रातःसवनम्" (ऐतरेय-ब्राह्मणे, २.८ )। यासां २२६ तृचयोनीनां यज्ञान्तरे सवनान्तरे वा प्रयोगस्तासामेवारम्भिका ऋचः पूर्वार्चिके संगृहीताः ।

सामवेदस्य पौरुषेयापौरुषेयवादे तु योनिमन्त्राणामपौरुषेयत्वं, सामगानानां तु पौरुषेयत्वं कैश्चित्कल्प्यते । वस्तुतस्तु योनिमन्त्राणां तदुत्पन्नसाम्नां चापौरुषेयत्वमेव प्रतिपाद्यते मीमांसकैः । उत्तराग्रन्थगततृच आम्नायामृचि समुत्पन्नं योनि-

मन्त्रगानं पूर्वार्चिकमन्त्रवदपौरुषेयम् । उत्तरयोर्ऋचोस्तु योनिमन्त्रसमुत्पन्नस्य साम्न आवापः क्रियत इत्यतस्तादृशस्यर्ग्द्वयस्य गानमप्यपौरुषेयमेव । इति मीमांसकानां मतं विस्तरेण विवेचितं पूर्वमीमांसायाम् । सुज्ञैस्तत्सर्वमत्रानुसन्धेयम् ।

## सामशाखाविचारः ।

'सहस्रवर्त्मा सामवेद' इति यदुक्तं भगवता पतञ्जलिना व्याकरणमहाभाष्ये, तस्मात्केचनैवमनुमिमते, यत्सामवेदस्य सहस्रसंख्यकाः शाखाः सन्तीति । तत्तु न सम्यगिव प्रतिभाति । वर्त्मशब्दस्य शाखार्थत्वाभावात् । 'सहस्रवर्त्मा सामवेद' इति वचनं सामगानं गानपद्धतिभेदेन सहस्रधा विभिद्यत इत्येव दर्शयति, न तु सामवेदस्य सहस्रं शाखाः सन्तीति । यतो यथा वेदान्तराणां शाखानामानि यत्रकुत्रापि दृश्यन्ते, तथा सामवेदस्य शाखासहस्रं न कुत्रापि निर्दिष्टमुपलभ्यते । त्रयोदशैव तु नामानि सामतर्पणविधौ सन्ति, यथा—

**राणायन[१] – शाट्यमुग्र्य[२] – व्यास[३] – भागुरि[४] – औलुण्डी[५] – गौल्गुलवि[६] – भानुमानौपमन्यव[७] – काराटि[८] – मशक गार्ग्य[९] – वार्षगव्य[१०] – कुथुम[११] – शालिहोत्र[१२] – जैमिनि[१३] – त्रयोदशैते मे सामगाचार्याः स्वस्ति कुर्वन्तु तर्पिताः ।** ( सामतर्पणम् )

सत्स्वप्येतेषु त्रयोदशसु नामसु, दुर्भाग्यवशादधुना अन्याः शाखासंहिता नोपलभ्यन्ते, केवलं "राणायनीय, कौथुमी, जैमिनीय" इति शाखात्रयस्यैव संहिताः समुपलभ्यन्ते । यत्तु चरणव्यूहे सहस्रं शाखाः सामवेदस्येत्युक्तं, तत्तु वङ्गीय-पण्डितैः सत्यव्रत–सामश्रमिभिः पौराणिकमिति मत्वा त्यक्तुमर्हमिति प्रतिपादितमेव । पुराणेषु कतिपयान्यन्यान्यपि सामशाखानामानि समुपलभ्यन्ते । तेषां सर्वेषां समन्वयः संशोधकैरवश्यं कर्तव्य इति । पूर्वोपदर्शितमहाभाष्यवचनं चरणव्यूहवचनं च प्रमाणीकृत्य सहस्रशब्दस्यानेकार्थकत्वमवलम्ब्य यावन्ति शाखानामानि प्रमाणग्रन्थेषु समुपलभ्यन्ते, तेषां गणनया इतरवेदापेक्षया प्रभूतशाखात्वं सामवेदस्याभ्युपेतुं शक्यत इति केचित् ।

वर्तते तावदेषा सामसंहिता राणायनीयानां कौथुमानां च । तयोर्मन्त्रभेदो नास्ति, केवलं गणनापद्धतिभेद एव । एके प्रपाठक–अर्धप्रपाठक–दशतिभिः, अन्ये तु अध्यायैः खण्डैश्च मन्त्रान् गणयन्ति । एषा गणनास्माभिरस्मिन्पुस्तके यथास्थानं सुविन्यस्ता । अत एषा संहिता राणायनीयानां कौथुमानां च भवति । जैमिनीयानां तु संहिता पाठभेदसहिता पुस्तकान्ते प्रदर्शयिष्यते । कौथुमी–राणायनीयशाखयोर्मध्ये क्वचित् स्वरभेदोऽपि दृश्यते, क्वचित्पाठभेदोऽपि । यथा कौथुमीया 'हाउ' इति वदन्ति राणायनीयास्तु 'हावु' इति । 'राइ' इत्यस्य स्थाने 'रायि' इति च । 'वाजेषु नो' इति ऋग्वेदिनः कौथुमीयाश्च पठन्ति 'वाजेषु णो' इत्यन्ये । एवमुच्चारणभेदाः सन्ति । अत्र केचन कुसुमशब्दाद्व्युत्पन्नं 'कौसुम' पदं 'कौथुम' शब्दस्य पूर्वरूपं मन्यन्ते । तत्र सामप्रातिशाख्यस्य "पुष्पसूत्रं, कुसुमसूत्रं, कौसुमं सूत्रं" इति संज्ञाया विद्यमानत्वात् । तत्प्रातिशाख्यं कदाचित्कौथुम्या एव शाखाया स्यात् ।

## सामस्वरप्रयोगः ।

ऋग्यजुःसामाथर्ववेदानां पठनसमये प्रायशः स्वरत्रयमेव प्रयुज्यते, क्वचिद्दीर्घस्वरिते चतुर्थस्वरोऽपि श्रूयते यथा—

अ॒ग्निमी॑ळे पु॒रोहि॑तम् । ( ऋङ्मन्त्रः )

अ[३] ग्नि[१] मी[२] ळे पु[३] रो[१] हि[२] तम् । ( सामयोनिमन्त्रः )

अ. उ. स्व. प्र. अ. उ. स्व. प्र.

नी. सा. रे. रे. नी. सा. रे. रे.

रे … … … मी ई ळे … … … हि.. तं

सा … ग्नि … … … … … रो … …

नी अ … … … … पु … … …

अत्र निषाद-षड्ज-ऋषभाणां स्वराणां श्रवणं भवति। अनुदात्तस्तु क्वचिद्धैवतेऽपि श्रूयते, यथा '**सं वां कर्मणा**' इत्यत्र '**वां**' इत्यनुदात्तो धैवतो भवति। एवं वेदपाठसमये स्वरत्रयमेव विशेषेण प्रयुज्यते। स्वरास्तु निम्नमध्यमोच्चभेदेन विभिन्नसवनेषु उच्चनीचा भवेयुः, परन्तु सर्वत्र स्वरत्रयस्यैव श्रवणं भवतीत्यत्र ज्ञातव्यम्। तथाच—

उदात्तः स्वरितश्चर्चि प्रचयो निहतः स्वरः। तत्र तु स्वरितात्पूर्वमुदात्तः प्रथमः स्वरः॥
स्वरितोऽन्य उदात्तश्च प्रचयश्च द्वितीयगः। द्वितृतीयस्वरः कम्पोऽनुदात्तस्तु तृतीयगः॥
स्वरितः कम्पते तत्र यत्रोदात्तः परो भवेत्। एकोदात्तात्परः स्वारः प्रचयश्चोच्चवद्भवेत्॥
सर्वेऽवशिष्टाः स्वरिताः स्मर्यन्ते सामशाखिना।

इति वचनेनार्चिकस्वराणां लक्षणविधानादार्चिकेषु ऋग्वेदवदेव स्वरनिर्णयः।

सामगाने तु सप्तानामपि स्वराणां संप्रयोगोऽवरोहक्रमेण प्रायशः श्रूयते। एतदेव सामगानस्यान्येभ्यो वेदपाठेभ्यो वैशिष्ट्यम्। 'यः सामगानां प्रथमः स वेणोर्मध्यमः स्वरः।' इति नारदीयशिक्षायां कथितं, तेन सामगानस्यो परिस्थितैरङ्कैः सप्त स्वरा एवं प्रकटीभवन्ति, यथा १ मध्यमः, २ गान्धारः, ३ ऋषभः, ४ षड्जः, ५ निषादः, ६ धैवतः, ७ पञ्चमः। सामगाने लिखितानामङ्कानामेष एव स्वरनिर्णयः, यमाश्रित्य सामगानस्थितानङ्कांश्च दृष्ट्वा स्वरज्ञा असंशयं सामगानं कर्तुं शक्ष्यन्ति। सामगानेषु ये त्वनङ्किताः स्वरास्ते पूर्वस्वराङ्केन समा इति बोद्धव्यम्। परन्तु सामयोनिमन्त्रेषु तु अनङ्कितान्यक्षराणि प्रचयस्वराणि प्रायशो भवन्ति यथा—

३ १ २ ३ १ २ ३ २
सहस्रशीर्षा पुरुषः सहस्राक्षः

इत्यत्र 'शी-षः-स-ह' इत्येतेषामक्षराणां प्रचयः स्वरो बोद्धव्यः, एवमेवान्यत्रापि ज्ञातव्यम्। तथा —

रकार-ककार-उकाराः सामचिह्नेषु विशिष्यन्ते। एवमन्तिम उदात्तः '२' इति द्विसंज्ञकेनाङ्केन लिङ्ग्यते, यथा—

३ २ ३ २ ३ २ ३ २ ३ २
गिरा (साम० ८); ऋञ्जसे गिरा (साम० १२); दिवि (साम० २०); रयिम् (साम० २२); बृहत् (साम० ९८) इति।

यदा तु द्वावुदात्तौ समागच्छेताम् तदा तत्रत्यः प्रथम एवोदात्त '१' इत्येतेनैकसंज्ञकेनाङ्केन लिङ्ग्यतेऽन्यस्तु वर्तत आलिङ्गित एव, परं तस्मात्परः स्वरितो '२र' इति रकारसहितेन द्व्यङ्केन प्रदर्श्यते। यथा—

३ २ ३ १ २र ३ १ २र ३ १ ३ १
'उत द्विषो मर्त्यस्य। (साम० ६); मूर्धा विश्वस्य। (साम० ९); देवो ह्यसि (साम० १०); वायो-
२र २ ३ १ २र
रनीके (साम० १३); प्रतित्यं चारु (साम० १६)।' इति।

अनुदात्तात्परः स्वरितोऽपि '२र' इत्येवं रकारसहितेन द्व्यङ्केन चिह्नितो भवति, किंतु तदा पूर्वोऽनुदात्तः '३क' इति ककारसहितेन त्र्यङ्केन लिङ्ग्यते यथा—

३क २र ३क २र २ ३क २र ३क २र ३क २र
'तन्वा (साम० ५२); देव्ये (साम० ५६); बलं न्युब्जवीर्यम् (साम० ९५); दूढ्यम् (साम० ११३)
३क २र २र ३क २र
चम्वोः (साम० ४९०); वाजं वाज्य (साम० ६५५)।' इति।

यदा तु द्वावुदात्तौ समागच्छेतां ताभ्यां परतश्चानुदात्तो यदि स्यात्तदा प्रथम एवोदात्तः '२उ' इति उकारसहितेन द्व्यङ्केन लिङ्ग्यतेऽन्यस्त्वचिह्नित एव रक्ष्यते, यथा—

३ २उ ३ २उ ३ २उ ३ २उ ३
'ऊत्या वसो (साम० ४१); त्वमित्स (साम० ४२); यो विश्वा (साम० ४४); त्यं विष्णुं (साम० ९१)
२उ ३ २उ ३ २उ ३
ब्रह्मेति (साम० ९४); रं जनं (साम० ९६); र्यं वचो (साम० ९८); इति।

इत्येवं सर्वेषां स्वरचिह्नानां यथास्थानं सुविन्यासो दृश्यते सामवेदे सामगानेषु च।

## सामपाठभेदाः ।

अत्रास्मिन्ग्रन्थे सर्वेषां मन्त्राणां ऋग्वेदीयस्थानानि सर्वत्र प्रदर्शितानि । तथापि क्वचिदेते सामवेदमन्त्राः पदभेदेन, क्वचित् शब्दव्युत्क्रमेण, क्वचित्स्वरभेदेन, क्वचिदक्षरभेदेन, क्वचिच्च पादव्युत्क्रमेण ऋग्वेदपाठाद्भिन्ना इव दृश्यन्ते । अभ्यसनीयोऽयं ऋक्सामपाठभेदविषयः । सांख्यायनादिषु ऋग्वेदीयशाखास्वन्यासु पाठभेदभिन्ना एते मन्त्रा भवेयुरिति यत्कैश्चिन्मन्यते, तदेव समीचीनमिव प्रतिभाति । सर्वेऽपि पाठभेदा एवमन्विष्य शाखान्तरेषु, विचारणीया इति ।

सामवेदे वालखिल्यमन्त्रा अपि संगृहीताः सन्ति । अतो वालखिल्यमन्त्राणां शाकलके ऋग्वेदे संग्रहकरणादूर्ध्वमेव सामवेदरचना संजाता इत्यनुमातुं शक्यते; अथवा यस्यां ऋक्शाखायां वालखिल्यमन्त्राः मूलतः सन्ति, तस्याः शाखासंहितायाः एवैते साममन्त्राः संगृहीता भवेयुरिति मतं समीचीनतरम् । शाकलीये ऋग्वेदे 'अथ वालखिल्यं, इति वालखिल्यम्' इति परिधीकरणादनुमीयते, यदेते वालखिल्यमन्त्राः पूर्वं ऋग्वेदीयशाकलसंहितायां नासन्निति । अन्यथा 'अथ-इति'-करणस्य न किञ्चिदपि संभाव्यते प्रयोजनान्तरम् । सामवेदे तु वालखिल्यमन्त्राणां संग्रहादेवानुमीयते यदेतदृग्वेदे शाकलके वालखिल्यसूक्तसंग्रहः सामवेदात्प्राचीन एवेति ।

"वेदानां सामवेदोऽस्मि" इति भगवद्गीतावचनबलेन भगवद्गीताकालात्पूर्वमेव सामवेदस्यास्येदृङ्माहात्म्यं विभूतिरूपत्वं च महापुरुषैः स्वीकृतमिति प्रतिभाति । भगवद्गीताकालश्च वर्षाणां सहस्रद्वयादर्वाचीनस्तु न कथमपि संभाव्यते । सामवेदस्य विभूतिमत्त्वस्वीकारायापि समुचितकालखण्डस्य व्यतिगमनमावश्यकमेव ।

ननु सन्त्यस्मिन्सामवेदे १०५* मन्त्राः ( अथवा विहायारण्यकं महानाम्न्यार्चिकं च ७६ मन्त्राः ) ये समुपलभ्यमानायां ऋग्वेदस्य शाकलशाखायां नोपलभ्यन्ते, कथं कुतो वा तेषामस्मिन्सामवेद आगमः ? उच्यते, यद्यपि शाकलसंहितायामेतेषां मन्त्राणामदर्शनं, तथापि सांख्यायनसंहितायां तेषां दर्शनं भवेदिति यत्कैश्चित्तर्क्यते तद्युक्तियुक्तमिति वयमुत्पश्यामः ।

## ऋग्वेदादिषु सामप्रशंसा ।

वेदमन्त्रेषु बहुविधा सामप्रशंसा श्रूयते, ऋग्वेदमन्त्रेषु शंसितं बहुशोऽङ्गिरसां साम, यथा—

( देवाः ) अङ्गिरसां सामभिः स्तूयमानाः ( ऋ० १।१०७।२ )

अङ्गिरसो न सामभिः । ( ऋ० १०।७८।५ ) इत्यादि ।

शकुनिपक्षिगानं सामगानमिव प्रतिभातीत्युक्तम्—

उभे वाचौ वदति सामगा इव गायत्रं च त्रैष्टुभं चानु राजति ॥

उद्गातेव शकुने साम गायसि; ब्रह्मपुत्र इव सवनेषु शंससि ॥ ( ऋ० २।४३।१-२ )

शकुनिस्वरवत्सामगाने स्वरप्रयोगो भवतीत्यनुमीयत एतस्मान्मन्त्रवर्णात् । यो जागर्ति, तमेव विद्वांसं सामानि यन्ति, यस्तु निद्राति, स सामगाने न शक्यो भवितुं प्रवीण इति प्रदर्शयन्नाह—

'यो जागार तमृचः कामयन्ते यो जागार तमु सामानि यन्ति'। ( ऋ० ५।४४।१४ )

इति, तथा च सर्वे विद्वांसं सामगायकमेव प्रशंसन्तीति कथयति—

'तमेव ऋषिं तमु ब्रह्माणमाहुर्यज्ञन्यं सामगामुक्थशासम्।' ( ऋ० १०।१०७।६ )

तथैव गीयमानं साम गायकमवतीति प्रदर्शयति—

उपगासिषत् श्रवत्साम गीयमानम् । ( ऋ० ८।८१।५ )

यूयमृषिमवथ सामविप्रं । ( ऋ० ५।५४।१४ )

सामविप्रं सामकुशलं सामगानप्रवीणं वा देवा अवन्तीति । तथा च शुद्धां देवतां शुद्धेनैव साम्ना स्तोता स्तौत्विति निदर्शयन्नाह—

'एतो न्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना।' ( ऋ० ८।९५।७ )

इन्द्राय साम गायत विप्राय बृहते बृहत् । ( ऋ० ८।९८।१; अथर्व० २०।६२।५ )

बृहस्पतिः सामभिः ऋक्वो अर्चतु । ( ऋ० १०।३६।५ )
अर्चन्त एके महि साम मन्वत । ( ऋ० ८।२९।१० )

तथा चान्यापि सामप्रशंसा—

आङ्गूष्यं शवसानाय साम । ( ऋ० १।६२।२ )
ऋतस्य सामन्नरणयन्त देवाः । ( ऋ० १।१४७।१ )
गायत्रेण प्रति मिमीते अर्कमर्केण साम त्रैष्टुभेन वाकम् । ( ऋ० १।१६४।२४; अथर्व० ९।१०।२ )
ये न परः साम्नो विदुः । ( ऋ० २।२३।१६ )
त्वष्टाजनत् साम्नः साम्नः कविः । ( ऋ० २।२३।१७ )
साम कृण्वन् सामन्यो विपश्चित् क्रन्दन्नेति । ( ऋ० ९।९६।२२ )
परावतो न साम तद्यत्रा रणन्ति धीतयः । ( ऋ० ९।१११।२ )
स हि द्युता विद्युता वेति साम । ( ऋ० १०।९९।२ )

ईदृग्विधानि सामानि परस्मात्पुरुषादेव समुद्भूतानीत्युच्यते, यथा—

तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । ( ऋ० १०।९०।९ ) इति ।

एवंविधा अनेके सामप्रशंसापरा मन्त्रा यथर्ग्वेदे तथैव यजुर्वेदेऽथर्ववेदेऽपि दृश्यन्ते । यथा—

... ... सामगेभिः आदित्येभिः ... ... । इष्टापूर्तमवतु नः ... ... ॥ ( अथर्व० २।१२।४ )
ऋचं साम यजामहे याभ्यां कर्माणि कुर्वते । ( अथर्व० ७।५४।१ )
बृहतः परि सामानि । ( अथर्व० ८।९।४ )
षड् जाता भूता प्रथमजर्तस्य षडु सामानि षडहं वहन्ति ।
षड्योगं सीरमनु सामसाम षडाहुर्द्यावापृथिवीः षडुर्वीः । ( अथर्व० ८।९।१६ )
सामानि यस्य लोमानि । ( अथर्व० ९।६।२ )
... ... सपत्नह ऋक्संशितः सामतेजाः । ( अथर्व० १०।५।३० )
यत्र ऋषयः प्रथमजा ऋचः साम यजुर्मही । ( अथर्व० १०।७।१४ )
सामानि यस्य लोमानि ... .. स्कम्भं तं ब्रूहि कतमः स्विदेव सः । ( अथर्व० १०।७।२० )
साम्ना ये साम संविदुरजस्तद्ददृशे क्व । ( अथर्व० १०।८।४१ )
... ... सामानि बिभ्रती । ( अथर्व० १०।१०।१४ )
ब्रह्मणा परिगृहीता साम्ना पर्यूढा । ( अथर्व० ११।३।१५ )
ऋक्साम यजुरुच्छिष्ट उद्गीथः प्रस्तुतं स्तुतम् ।
उच्छिष्टे स्वरः साम्नो मेडिश्च तन्मयि ॥ ( अथर्व० ११।७।५ )
ऋचः सामानि भेषजा ॥ ( अथर्व० ११।७।२४ )
शरीरं ब्रह्म प्राविशदृचः सामाथो यजुः । ( अथर्व० ११।८।२३ )
ऋचः सामानि छन्दांसि ... ... उच्छिष्टाज्जज्ञिरे सर्वे ... ... । ( अथर्व० ११।७।२४ )
ब्रह्माणो यस्यामर्चन्त्यृग्भिः साम्ना यजुर्विदः । ( अथर्व० १२।१।३८ )
तमृचश्च सामानि च यजूंषि च ब्रह्म चानुव्यचलन् । ( अथर्व० १५।६।८ )
ऋचां च वै स साम्नां च ... ब्रह्मणश्च प्रियं धाम भवति । ( १५।६।९ )

एतैर्मन्त्रैरसंशयं सूच्यते यदृगथर्वसमये सामगानं समृद्धमेवासीदिति । ऋग्वेदे दृश्यन्त एतानि साम्नां नामानि वैरूपं, बृहत्, गौरिवीति, रैवतं, अर्कं, गायत्रं, श्लोकं, भद्रं इत्यादीनि । एवमेव वेदेऽथर्वणेऽपि सामनामानि दृश्यन्ते ।

यजुर्वेदे रथन्तरं ( वा० य० १०।१० ), बृहत् ( य० १०।११ ), वैरूपं ( य० १०।१२ ), वैराजं ( य० १०।१३ ), शाक्करं, रैवतं ( य० १०।४ ), गायत्रं, गौरिवीतं, अभीवर्तं, वैखानसं. वामदेव्यं, यज्ञायज्ञियं ( य० १२।४ ), क्रोशं, सत्यस्यार्धि, प्रजापतेर्हृदयं, श्लोकं, अनुश्लोकं, भद्रं, राजन्, अर्क्यं, इलान्दम् इत्यादीनि ।

ऐतरेये ब्राह्मणेऽपि- बृहत्, रथन्तरं, वैरूपं, वैराजं, शाक्करं, रैवतं, गायत्रं, श्यैतं, नौधसं, रौरवं, यौधाजयं, अग्निष्टोमीयं, भासं, विकर्णम् इत्यादीनि दृश्यन्ते ।

एतानि साम्नां वैशिष्ट्यबोधकानि नामानि सूचयन्ति, यदृग्वेदसमयेऽपि विविधानि सामगानान्यासन्निति । यजुर्वेद-स्याथर्ववेदस्यैतरेयस्य ब्राह्मणस्य च समये तु यज्ञस्य समृद्धत्वात्सामसमृद्धिरेवासीदिति स्पष्टम् । ये तु सामगानमाधुनिक-मेवेति वदन्ति, तेषां निर्मूलमेव तत्कथनमित्येतेन सिद्ध्यति ।

## सामस्वरगणना ।

सामवेदस्य स्वरगणना अत्यन्तमेव समीचीना वर्तते । नैतादृशी परिगणना स्वराणां केनापि कृताऽन्येषां वेदानाम् । अत्र अस्या गणनाया विषये किञ्चिद् अवश्यं वक्तव्यम्—

३ १ २   ३ २ ३ १ २   ३ १ २   ३ २ ३   २ ३ १ २
१०८४ रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम ॥ १ ॥

२ ३ २ ३   १ २ ३ २   ३ १ २   ३ २
१०८५ आ घ त्वावान् त्मना युक्तः स्तोतृभ्यो धृष्णवियानः ।

३ २उ ३ २ ३क २र
क्षणोरक्षं न चक्र्योः ॥ २ ॥

१   २र   ३ १   २र   ३ २
१०८६ आ यद् दुवः शतक्रतवा कामं जरितृणाम् ।

३ २उ ३ १   २र
क्षणोरक्षं न शचीभिः ॥ ३ ॥ १४( ठी ) ॥ ( धा० १८। उ० २। स्व० ४ )

अत्र अङ्कचिह्नरहितान्यक्षराण्येतानि- ( प्रथममन्त्रे )- र्नः । स । स । न्तु । इति चत्वारि ।
( द्वितीयमन्त्रे )- धृ । ष्ण । वि । र । इति चत्वारि ।
( तृतीयमन्त्रे )- य । दु । श । त । क्र । का । ज । रि । र । श । इति दश ।

सर्वाण्येतानि मिलित्वा अष्टादश भवन्ति । एतानि ( धा० १८ ) इति संकेतेन संलिखितानि । अत्र त्वयं विशेषः, यान्यन्त्याक्षराणि " जाः । म । भिः " इति त्रीणि, तानि अङ्कचिह्नरहितान्यपि नैव गण्यन्ते, तेषामन्ते अवस्थानात् । चिह्नरहितान्यन्त्याक्षराणि नैव गणनीयानीति नियमात् । एवं अस्मिन्मन्त्रत्रये अष्टादशाक्षराणि चिह्नरहितानीति द्रष्टव्यम् ।

उकारचिह्निते द्वे एवाक्षरे । द्वितीयमन्त्रे ' णो (२उ) ' इति, तृतीयमन्त्रेऽपि तदेवाक्षरमुकारितं, एवमुकारचिह्नितौ द्वावे-वात्रोदात्तौ, तौ तु ' उ० २ ' इति संकेतेनात्र प्रदर्शितौ ।

रकारचिह्निताः स्वरितास्तु अत्र चत्वारः । द्वितीयमन्त्रे ( क्र्योः (२र) ) इत्येकः ।

तृतीये मन्त्रे त्रयः " वः (२र) । मं (२र) । ची (२र) " इति । एवं चत्वारो भवन्ति । ते ' स्व० ४ ' इति संकेतेन दर्शिताः ।

एतया स्वरगणनया मन्त्राणां मध्ये स्वरप्रमादो न भवितुं कदाचिदपि शक्नोति । अतः एवंविधा गणना स्वरस्थिरी-करणाय सर्वेषु वेदेषु कर्तुं योग्यैव । अस्याश्च गणनाया संकेतो ' ठी ' इति दृश्यतेऽत्र । ' ठी ' इत्यस्मादेवाक्षरादेषा स्वरगणना ज्ञायते, यथा—

' ठी ' इत्यत्र ' ठ् + ई ' इति द्वावेव वर्णौ स्तः । ई इति ' अ-आ-इ-ई ' इत्यत्र चतुर्थः स्वरो वर्तते, स तु ' स्व० ४ ' इति संकेतेन सूच्यते । ठ इति ट-वर्गस्य द्वितीयं व्यञ्जनं, तत्तु ' उ० २ ' इति संकेतेन सूच्यते, द्वितीयमेवैतद्व्यञ्जनं ट-वर्गे । ' धा० १८ ' इति संकेते स्थिता १८ संख्या [illegible] पञ्चभिर्भागहारेऽवशिष्टास्त्रयः । तृतीयस्य वर्गस्यैषा संख्या

सूचिका। क-च-ट-त-प इति पञ्चैव वर्गाः, तत्र तृतीयः 'ट' इति वर्गोऽनया संख्यया सूच्यते। अस्मिन्वर्गे च द्वितीयं 'ठ' इति व्यञ्जनं, तत् सूचितं 'उ० २' इत्येतया उकारसहितया द्विसंख्यया। 'स्व० ४' इत्येतेन चतुर्थः स्वर सूचितः 'ई' इति। एवं (ठ्+ई) 'ठी' इति सर्वेषां संकेतानां बोधकं अक्षरं भवति।

पञ्चभिर्भागहारेणावशिष्टया संख्यया वर्गाणामेवं बोधो भवति—

| अवशिष्टा संख्या | वर्ग |
|---|---|
| १ | क |
| २ | च |
| ३ | ट |
| ४ | त |
| ५ | प |

यत्र १५, २०, ४० इत्येवं धारीसंख्या भवेत्तदा तत्र पवर्गेणैव भाव्यम्। उदात्तस्वरेण वर्गस्थं व्यञ्जनं बुध्यते, तद्यथा-

| | | |
|---|---|---|
| उ० | १ | क च ट त प |
| उ० | २ | ख छ ठ थ फ |
| उ० | ३ | ग ज ड द ब |
| उ० | ४ | घ झ ढ ध भ |
| उ० | ५ | ङ ञ ण न म |

स्वरितेनाङ्केन स्वरा बुध्यन्ते यथा—

| | | |
|---|---|---|
| स्व० | १ | अ |
| स्व० | २ | आ |
| स्व० | ३ | इ |
| स्व० | ४ | ई |
| स्व० | ५ | उ इत्यादयः। |

यत्र तूदात्तो नास्ति, तदा धारीनिर्दिष्टा संख्या एकोना संख्या कर्तव्या, यथा (धा० १७। उ० नास्ति। स्व० २) (या) (साममन्त्रक्रमाङ्काः ८४१-८४३) इत्यत्र उदात्तस्याभावात् धारीसंख्या १७ इत्येकोना भूत्वा १६ भवति। उदात्तस्याभावात् य-र-ल-व-शा ग्राह्याः। यत्र तूदात्तो न भवेत्तत्र यवर्गो ग्राह्य इति नियमः। अत्र १६ इति संख्या एकोना भूत्वा संजाता, तस्याः पञ्चभागहारेण एकोऽवशिष्टः। अतो य-वर्गस्य प्रथमेव 'य' इति व्यञ्जनमत्र ग्राह्यम्। अत्र स्वरितौ द्वौ, द्वितीयस्वरो 'आ' इति, स चात्र यकारेण सह मिलित्वा 'या' इति संकेतो जातः।

यत्रोदात्तो न भवति, तत्र धारीसंख्यां एकोनां कृत्वा, तां पञ्चभिर्हृत्वा यदि किमपि नावशिष्येत्तर्हि तत्र 'ह' इति संकेताक्षरं भवति यथा—

(साममन्त्रक्रमसंख्या ८८०-८८२) (धा० २१। उ० नास्ति। स्व० १) (ह)—अत्र २१ संख्यायां एकोनायां कृतायां २० संजाता, सा पञ्चभिर्हृत्वा न किञ्चिदप्यवशिष्यते, अतः 'ह' इति संकेताक्षरं, स्वरितोऽप्यत्र एक एव, अतः अत्र 'ह' इत्येव संकेतः।

यत्र तूदात्तो वा स्वरितोऽपि वा न भवेत्, तदा तत्र 'औ' कारो भवति, यथा (धा० १५। उ० नास्ति। स्व० नास्ति) (वौ)। (साममन्त्रसंख्या १३२६-१३२८)

उ--नास्ति अतः १५ संख्यां एकोनां कृत्वा, सा संख्या १४ संजाता। सा तु पञ्चाभिर्हृत्वा ४ अवशिष्टाः, उकारा-

भावाद्यवर्गस्यैतच्चतुर्थाक्षरं य--र--ल--व इति वकारः, स्वरितस्याभावात् औकारः, एवं 'वौ' कारः संजात इति। एवं सर्वत्र बोध्यम्।

अत्रायं गणनाप्रकार उत्तरार्चिकस्य प्रदर्शितः। पूर्वार्चिकस्य गणनाप्रकारेऽस्ति कश्चिद्विशेषः। पूर्वार्चिके '**स्वरितः प्रथमो भवति, मध्यम उदात्तो, धारी चान्त्य**' इति। अत्र स्वरितधार्योर्व्यत्ययेन निवेशनं भवति। यथा- (साम-क्रमाङ्कः ११-२०) '**नमस्ते अग्न ओजसे**' इति पूर्वार्चिकस्य द्वितीये खण्डे '**स्वरिताः ६। उदात्तौ २। धारीगणना ५२। (खा)।**' अत्र स्वरितसंख्यया कवर्गो लभ्यते पञ्चभिर्हारात्। उदात्तस्य संख्यया वर्गस्थं द्वितीयं व्यञ्जनम्। धारीसंख्यया च पञ्चभिर्हाराद् द्वितीयः स्वरः। तेन 'खा' इति संकेतो भवति। सर्वमन्यत्समानम्।

महत्त्वत्वस्याः स्वरगणनाया औचित्यमतीव वर्तते। अतः सर्वः सामवेदः पुनरनयैव रीत्या परिगणनीय इत्युचितं प्रतिभाति। यतो मुद्रितेषु ग्रंथेषु, लिखितेषु च ग्रंथेषु गणना कुत्रापि समीचीना न दृश्यते। या च यौरोपीयैः पण्डितैर्मुद्रिता साप्यशुद्धैव। अतः पुनः परीक्षणीयोऽयं विषयः।

## सामवेद-ग्रन्थाः।

एतान् सामयोनिमन्त्रानाश्रित्य यानि गानानि ऋषिभी रचितानि, तेषां गानग्रन्थाः (१) (ग्राम-) गेयगानं, वा प्रकृतिगानं, वा (२) आरण्यक (-गेय-) गानं, (३) ऊहगानं, (४) ऊह्यगानं, रहस्यगानं वेति प्रसिद्धाः। अनेकविधानि तेषु पर्वाण्युपप्रकरणरूपाणि सन्ति। तेषां मध्ये गानसंख्या जैमिनीयशाखानुसारेण ३६८१ इति, कौथुमी-राणायनीय-शाखयोर्गानानुसारेण २७२२ इति च भवति। यथा—

| | जैमिनीय-गानानि | कौथुमीय-गानानि |
|---|---|---|
| ग्रामगेय-गानानि | १२३२ | ११९७ |
| आरण्यगेय-गानानि | २९१ | २९४ |
| ऊह-गानानि | १८०२ | १०२६ |
| ऊह्य-गानानि | ३५६ | २०५ |
| | ३६८१ | २७२२ |

सर्वाण्येतानि गानानि सविस्तरेण गानग्रन्थेषु मुद्रापयिष्यन्तेऽस्माभिः। गानविषये यत्किञ्चिद्वक्तव्यं तत्सर्वं गानग्रन्थस्य भूमिकायामेव वक्ष्यामः। कौथुमीय-शाखापेक्षया १८२ संख्यया न्यूना मन्त्राः जैमिनीय-शाखायां वर्तन्ते। यथा—

| | जैमिनीयाः | कौथुमीयाः |
|---|---|---|
| पूर्वार्चिके | ५८७ | ५८५ |
| आरण्यके | ५९ | ५९ |
| उत्तरार्चिके | १०४१ | १२२५ |
| | १६८७ | १८६९ |
| महानाम्नी मन्त्राः | ६ | ६ |
| | १६९३ | १८७५ |

परं जैमिनीयानां गानानि कौथुमेभ्यः सहस्राधिकानीति जैमिनीयानां विशेषः। जैमिनीय-शाखायाः मन्त्रक्रमपाठ-विशेषश्चात्र परिशिष्टे परिदर्शितः।

## सामब्राह्मणानि।

(१) ताण्ड्यब्राह्मणं (प्रौढब्राह्मणं, पञ्चविंशब्राह्मणं वा), (२) षड्विंशब्राह्मणं, (३) सामविधानब्राह्मणं,

( ४ ) आर्षेयब्राह्मणं, ( ५ ) देवताध्यायब्राह्मणं, ( ६ ) उपनिषद्ब्राह्मणं ( संहितोपनिषद्ब्राह्मणं मंत्रब्राह्मणं वा ), ( ७ ) वंशब्राह्मणं, इत्यादीनि ब्राह्मणानि ।

षड्विंशं ताण्ड्यब्राह्मणस्यैव षड्विंशोऽध्यायः । अत एव पूर्वो भागः पञ्चविंशब्राह्मणमित्युच्यतेऽपरं षड्विंशमिति । पञ्चविंशं षड्विंशं ब्राह्मणं च छान्दोग्योपनिषच्च मिलित्वा ताण्ड्यमहाब्राह्मणं भवति । षड्विंशेऽद्भुतकथानां सद्भावात्तदद्भुतब्राह्मणमित्यप्युच्यते, अन्यानि त्वनुब्राह्मणानीति कथ्यन्ते । जैमिनीयोपनिषद्ब्राह्मणे केनोपनिषद् वर्तते । अतः जैमिनीयशाखाया अपरं नाम तलवकार–शाखा इति भवेत्, यतस्तलवकारीया केनोपनिषदिति प्रसिद्धैव ।

सामसूत्राणि तु ( १ ) मशक–कल्पसूत्रं, ( २ ) क्षुद्रसूक्तं, ( ३ ) लाट्यायनश्रौतसूत्रं, ( ४ ) गोभिलगृह्यसूत्रं, राणायणीयशाखायाः द्राह्यायणश्रौतसूत्रं, खादिरगृह्यसूत्रं, पुष्पसूत्रं, इत्येवमादीनि सन्ति । पुष्पसूत्रं सामवेदस्य प्रातिशाख्यमिति प्रसिद्धिः ।

सर्वेऽप्येते ग्रन्था यथाकालं मुद्रापयिष्यन्ते । एतेषामध्ययनेन विना न सामवेदस्याध्ययनं साङ्गं भवितुमर्हतीति ।

## अनुनासिक–निदर्शनम् ।

सामवेदसंहितामुद्रणं कैश्चिदनुनासिकचिह्नेन सहितमन्यैश्चानुनासिकचिह्नरहितं कृतम् । यथा—

| सामवेद–मन्त्रक्रमाङ्कः | अनुनासिकचिह्न–रहितं | अनुनासिकचिह्न–सहितं | उत्तरवर्णः |
|---|---|---|---|
| १५ | स्तोमं रुद्राय | स्तोम९ं रुद्राय | र |
| २७ | अपां रेतांसि | अपा९ं रेता९ंसि | र स |
| २७८ | शतं शतं | शत९ं शतं | श |
| २८१ | त्रिंशत् | त्रि९ंशत् | ,, |
| ९८ | ज्योतींषि | ज्योती९ंषि | ष |
| ८८१ | ज्योतींष्यायवे | ज्योती९ंष्यायवे | ,, |
| १९ | धियं सचन्ते | धिय९ं सचन्ते | स |
| ८७९ | आ वंसते | आ व९ंसते | ,, |
| २ | यज्ञानां होता | यज्ञाना९ं होता | ह |
| ,, | विश्वेषां हितः | विश्वेषा९ं हितः | ,, |

एवमन्यत्रापि द्रष्टव्यम् । अनुनासिक–चिह्नरहित–मुद्रणे प्रमुखाः पं० भवभूति–भट्टाचार्याः, पं०नरेन्द्रचन्द्र–वेदान्ततीर्थाः कलकत्ता–निवासिन–श्चैवमादयः । अनुनासिकचिह्नसहितमुद्रणे प्रमुखा म० स्टिवेनसन, बेन्फे यौरोपीयाः, पं० सत्यव्रतसामश्रमिणः कलकत्ता–निवासिन–श्चैवमादयः ।

लिखितग्रन्थेष्वपि द्विविधा ग्रन्थाः समुपलभ्यन्ते । एवं द्विविधायां संमत्यामस्मिन्सामवेदसंहिताया योनिमन्त्रमुद्रण–समयेऽनुनासिकस्य '९ं' रङ्गचिह्नं संप्रयोक्तव्यं न वेति विचारणीयम् । 'या ऋक् तत् साम' इति छान्दोग्योपनिषद्वचनबलेन ऋञ्चान्त्र एव सामयोनिमन्त्र इति निश्चितमेव । ऋग्विलक्षणः साममन्त्रो नैव भवितुं शक्य इति सिद्धान्तः । ऋग्वेदे तु 'य–र–ल–वेभ्योऽन्तस्थेभ्य ऊष्मभ्यश्च श–ष–स–हेभ्यः पूर्वोऽनुस्वारो बिन्दुरूपेणैव 'वंसते' इतिवल्लिख्यते, न तु 'व९ंसते' इतिवद्रङ्गचिह्नेन सहितः । अथर्ववेदिनोऽपि ऋग्वेदवदेव लिखन्ति । सामयोनिमन्त्रास्तु समुद्धृता ऋग्वेदादेव अतस्ते समुल्लेखनीया ऋग्वेदवदेवेति विमृश्यास्माभिरत्रास्मिन्ग्रन्थे सर्वत्रानुनासिक–चिह्नरहितमेव कृतं मुद्रणम् । ऋग्वेदे तु स्वरात्पूर्वोऽनुनासिको रङ्गचिह्नेनैव सर्वत्र प्रदर्श्यते, अतः सोऽस्माभिरत्रापि ऋग्वेदवदेव संमुद्रितः यथा 'महाँ इन्द्रः' इति, परं शषसहरेफपूर्वोऽनुनासिको बिन्दुरूपेणैव प्रदर्शित ऋग्वेदवत्, यथा 'स्तोमं रुद्राय' इत्यादिः ।

सामगानानि तु योनिमन्त्राश्रितान्यपि सर्वथा विकार-विश्लेषणादिभिः पृथक्कराण्येवातस्तत्रत्यो रङ्गः ' ँ ' इति चिह्नेनैव सर्वत्र प्रदर्शयिष्यते ।

## रङ्गस्य व्याहरणम् ।

अनुस्वारपदे पूर्वे विकारमुपगच्छति । वेष्टितं बिंदुमात्रं च तल्लिखित्वा प्रकीर्तितम् ॥
रेफोष्मसु प्रत्ययेषु निदर्शनमथोच्यते । चित्रँ राधाँशुर्मदाय हवीँषितो धियँ सचे ॥
त्वँ होतेति च पञ्चानां निदर्शनमितीरितम् । ऊष्माणस्तु यदान्येन व्यंजनेन समन्विताः ॥
स्थिताश्च प्रत्यये तेषां वैकृतं तुल्यमुच्यते । सोमँ श्रीणन्ति नृँष्पाहि सँस्थे त्वँ ह्यंगदेति च ॥
मात्रा द्विमात्रोऽनुस्वारो द्विमात्रान्मात्र एव च । मात्रिकादपि संयोगे मात्रिकस्तु द्विरूपवत् ॥

एतेन वचनजातेन अनुनासिकचिह्नसहितलेखनमेव सप्रमाणं भवति । इति रङ्गविधायकाः ब्रुवन्ति ।

रङ्गस्यास्य रङ्गचिह्ने लिखितेऽलिखितेऽपि वा, अनुनासिकस्य व्याहरणं कथं वा कर्तव्यमिति मुख्यः प्रश्नोऽत्र वर्तते । देशभेदेन विभिद्यते समभिव्याहरणम् । ' गँ, गुँ, ग्वं, ग्वँ ' इत्येवमादीनि क्रियन्तेऽस्योदीरणानि । एतान्यसमीचीनान्येवेति प्रतिभाति, यतस्तत्र गकारस्य कण्ठ्यस्य, उकार-वकारयोरोष्ठ्ययोर्गदने नास्ति प्रमाणलेशोऽपि । अनुस्वारस्य नासिकैव स्थानम्, अनुनासिकस्य तु मुखनासिके । एवं सति स्थानान्तरयोः कण्ठ्यौष्ठ्ययोर्वर्णयोर्भाषणं नैव कथंचिदपि प्रमाणयितुं शक्यते । व्याहरणशुद्धाशुद्धत्वविनिर्णये स्थानविचार एव बलवत्तरं प्रमाणं भवति । तद्यथा—

अनुस्वारयमानां च नासिकास्थानमुच्यते ॥ २२ ॥ यथा सौराष्ट्रिका नारी तक्रँ इत्यभिभाषते ।
एवं रङ्गाः प्रयोक्तव्याः खे अराँ इव खे दया ॥ २६ ॥ रङ्गवर्णं प्रयुञ्जीरन्नो ग्रसेत्पूर्वमक्षरम् ।
दीर्घस्वरं प्रयुञ्जीयात्पश्चान्नासिक्यमाचरेत् ॥ २७ ॥ हृदये चैकमात्रस्तु अर्धमात्रस्तु मूर्धनि ।
नासिकायां तथार्धं च रङ्गस्यैव द्विमात्रता ॥ २८ ॥ हृदयादुत्करे तिष्ठन् कांस्येन समनुस्वरन् ।
मार्दवं च द्विमात्रं च जघन्वाँ इति निदर्शनम् ॥ २९ ॥ ( पाणिनीय-शिक्षा )

नासिकास्थानीयोऽनुस्वारः स्पर्शेषु य-व-लेषु च परेषु सत्सु परसवर्णतामभ्येति । ' अनुस्वारस्य ययि परसवर्णः । वा पदान्तस्य । ( पा० अ० ८।४।५८-५९ ) अपदान्तस्यानुस्वारस्य नित्यं परसवर्णो भवति, पदान्तस्य तु वैकल्पिकः । यथा- ओङ्कारः, पञ्चाङ्गं, घण्टा, मन्त्रः, अम्बा । त्वं करोषि—त्वङ्करोषि, सँयन्ता—संय्यन्ता, संवत्सरः—सँव्वत्सरः, यं लोकं— यँल्लोकं । परसवर्णे कृतेऽकृते वा, लिखितेऽलिखिते वा, व्याहरणं त्वेतेषां समानमेव भवति, परवर्णानुयायित्वादनुस्वारस्य । श-ष-स-ह-रेफेषु परेषु सत्सु संपूर्णतयानुस्वारो नैव परसवर्णतां भजते, तदा तस्यानुनासिको भवति—

अनुस्वारस्य ँ इत्यादेशः शषसहरेफेषु । ( प्रतिज्ञापरिशिष्टसूत्रे ३।१ )
नश्चापदान्तस्य झलि । ( पा० अ० ८।३।२४ )

नस्य मस्य चापदान्तस्य झल्यनुसारः । ' यशांसि, आक्रंस्यते '

एवं अनुस्वारस्य रङ्गादेशो भवति वैकल्पिकः । 'अतोऽटि नित्यं' ( पा० सू० ) इति सूत्रेण नित्यादेशेऽपि तैत्तिरीयाः 'महां इन्द्रः' इति, ऋग्वेदिनस्तु 'महाँ इन्द्रः' इति पठन्ति । अत एव आदेशो नित्योऽपि छन्दसि वैकल्पिकः सञ्जातः । एवमेव ऊष्मपूर्वमनुस्वारं ऋग्वेदिनोऽनुस्वारं बिंदुरूपं लिखन्ति, तमेव वाजसनेयिनोऽनुनासिकं रङ्गचिह्नयुतं लिखन्ति एवमेष वैकल्पिकः पाठो छन्दसि दृश्यते ।

यदा तु रङ्गो भवति तदा तस्यानुनासिकस्य व्याहरणं कथं कर्तव्यमिति प्रश्नोऽत्र व्यथयति संशोधकं, यतस्तस्य भिद्यतेऽनेकधा निगदनम् । 'मुखनासिकावचनोऽनुनासिकः' ( पा० सू० ) इत्याह भगवान्पाणिनिः । मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञो भवति, अस्यैव रङ्ग इति शिक्षायां, प्रातिशाख्ये च 'रक्त, राग' इति च संज्ञा भवन्ति । स ह्रस्व-दीर्घगुरुभेदैस्त्रिधा विभिद्यते ।

अनुनासिकोच्चारणविषये यदुक्तं पाणिनीयायां शिक्षायां तत्तु तत्त्वतोऽनुसन्धेयमत्र। पूर्वस्वरं दीर्घं प्रयुञ्जीयात्, पश्चान्नासिक्यं व्याहरणमाचरेदिति, अनुनासिको हृदय एकमात्रोऽर्धमात्रो मूर्धनि, नासिकायां चार्धमात्रः, एवं रङ्गो द्विमात्रकः। यथा सौराष्ट्रिका नारी 'तक्रँ' इत्यभिभाषते, यथा च कांस्यस्य झङ्कारो भवति समभिघातादूर्ध्वं, तथैव मार्दवपूर्वकं रङ्गमभिभाषेत। एवं रङ्गविषये पाणिनीयानुशासनम्। रङ्गचिह्ने लिखितेऽलिखितेऽपि तस्य व्याहरणं समानमेव भवति। यथा जिह्वामूलीयोपध्मानीयौ विसर्गौ चिह्नेन सहितौ लिखितौ चिह्नरहितौ वापि, तथापि द्वयोरपि तुल्यमेव भवति समुच्चारणम्। यथा- 'कः पदार्थः = क ꣶ पदार्थः। रामः कः= राम ꣵ कः। एवमेवास्य रङ्गस्य चिह्नेन रहितस्य सहितस्य वा तुल्यमेव पाणिनीयानुशासनानुसारेण व्याहरणं भवतीति ज्ञातव्यम्।

एवं सति, तस्य रङ्गस्य 'ग्वं, ग्वँ, गुं' इत्यादीनि मार्दवहीनानि कठोराणि स्थानव्यभिचारदोषदुष्टानि व्याहरणानि, सर्वथा त्याज्यान्येवेति। एवं शषसहरेफेषु परेषु सत्सु अनुनासिकपूर्वं स्वरं दीर्घमुच्चार्य नासिकायामेवानुनासिकं गुञ्जयित्वा, तदूर्ध्वं अग्रेवासिनं वर्णं प्रयुञ्जीयात्, यथा 'वंसते' इत्यस्य 'वाꣳसते' इति। न तु 'वग्वंसते' इति।

यथा हिन्दी-भाषायां 'नहीँ, कहाँ' इति, मराठीभाषायामपि 'काँहीँ' इत्यादीनां व्याहरणानि मुखसहितनासिकायां भवन्ति, तथैव वेदेषु रङ्गस्योच्चारणं भवितुमर्हति। परतस्तु विद्वांस एव प्रमाणमित्यलं पल्लवितेन।

# परिचय-ग्रन्थाः।

## मुद्रित-ग्रन्थाः।

सामवेदस्यास्य मुद्रणसमये ये ग्रन्था अवलोकितास्तेषां मध्ये प्रमुखा मुद्रितग्रन्था एते—

(१) लन्दनपुर्यां श्रीमता रेवरण्ड जे. स्टीवेन्सन (Rev. J. Stevenson) महोदयेन सम्पादितं, तच्च श्रीमता एच्० एच्० विलसन (H. H. Wilson. M. A., F. R. S.) महाशयानां निरीक्षणेन सन १८४३ ख्रिष्टाब्दे मुद्रितं, सामवेदस्य पुस्तकम्। अस्मिन्ग्रन्थे आरण्यकं पर्व, महानाम्न्यार्चिकं च नास्ति। नापि स्वरचिह्नानि प्रदर्शितानि। स्वरचिह्नाभावात् धारीगणनात्र मुद्रितापि निष्प्रयोजनैव संजाता। अत्र मुद्रिता मन्त्रा अशुद्धपदच्छेददोषेणान्यैश्च बहुविधैर्मुद्रणप्रमाददोंषपूर्णा एव सन्ति। वर्षशतात्पूर्वं लन्दननगरे मुद्रितमित्यर्थमेव ते सम्पादक-निरीक्षक-मुद्रकाः प्रशंसामर्हन्ति। अत्रैक एव गुणो दृश्यते यन्मन्त्रा असंकीर्णतया पृथक्पृथङ् मुद्रिताः। अन्ते परिशिष्टरूपेण बहवः पाठभेदा अपि संकलिताः सन्ति।

(२) शार्मण्यदेशे बर्लिननगरे सन १८४८ ख्रिष्टाब्दे श्री० बेन्फे-महाशयैः प्रकाशितं सामवेदस्य पुस्तकं, प्रायशः शुद्धं, स्वराङ्कैः संयुतं, बहुभिः पाठभेदैः सहितं, महत्या पाठभेदविचिकित्सात्मकया भूमिकया युतं, संशोधनकर्मणि संपादकस्य प्रवीणत्वमसंशयं प्रकटयति। समस्तेषु मुद्रितग्रन्थेषु वतर्त एतदेवादर्शपुस्तकम्। अत्र धारीगणना मुद्रिता परिशिष्टविभागे, परं सा सदोषैवेति प्रतिभाति।

(३) डा० डब्ल्यू० कलान्देन ब्रेस्लौनगरे सन १९०७ ख्रिष्टाब्दे सामवेदस्य जैमिनीयसंहितायाः पुस्तकं रोमनाक्षरैर्मुद्रितम्। पाठभेदसहितं विस्तृतया भूमिकया च शोभितमतीव शुद्धं पुस्तकं वर्तते।

(४) कालिकातानगरे पूज्यपादैः सत्यव्रतसामश्रमिभिर्महता प्रयत्नेन संशोध्य, सायणभाष्यसहिता सामवेदसंहिता, पदपाठेन सामगानादिभिः, सर्वैः स्तोभपाठैश्च संयुता 'रायल एशियाटिक सोसायटी' द्वारा मुद्राप्य प्रकाशिता।

(५) कालिकातानगरे सन १९३६ ख्रिष्टाब्दे श्री नरेन्द्रचन्द्र वेदान्ततीर्थैः एम्० ए० उपाधिधारिभिः सांख्यतीर्थ-मीमांसातीर्थ-तत्त्वरत्नशास्त्रिभिः सामवेदसंहिता सायणभाष्य-भाष्यसार-पदपाठटिप्पण्यादिभिः सहिता, श्रीभवभूति-भट्टाचार्यैः विद्याभूषणैः एम्० ए० इत्युपपदधारिभिः संस्कृता प्रकाशिता च। एभिरेव सामवेदस्य केवलं संहितापाठोऽपि पृथक्तया मुद्राप्य प्रकाशितः। अत्र सामवेदस्य पूर्वार्ध एव संगृहीतः।

(६) लवपुरे (लाहौरे) श्रीमद्भिः पण्डितवरैः (डाक्तरेत्युपपदधारिभिः) आचार्यैः रघुवीरशर्मभिः सुसंपाद्य प्रकाशिता जैमिनीया सामवेदसंहिता। एषा स्वरचिह्नरहिताऽस्ति।

(७) अजमीरनगरे वैदिकयन्त्रालयस्थैः पण्डितैर्मुद्रिता सामवेदसंहिता मूलमात्रैव ।

(८) अजमीरनगरे आर्यसाहित्यमण्डलेन प्रकाशिता पण्डितजयदेवशर्मणा हिंदीभाषायामनूदिता सामवेदसंहिता ।

एतानि मुद्रितानि पुस्तकानि पाठभेदनिश्चयार्थं संप्रयुक्तानि ।

## लिखित-ग्रन्थाः ।

लिखित-ग्रन्थेषु आदर्शग्रन्था अतीव शुद्धा एते संमिलिताः—

(१) वटोदरनगरादानीता श्रीमतां नरहरिशंकर-भाईशंकर-शास्त्रिणां ग्रन्थसंग्रहात्संप्राप्ता सामवेदसंहिता । एतत्पुस्तकं वैदिकानां सामपाठिनां पठनपाठनपरम्परया शोधितमतीव शुद्धं शोभनाक्षरैश्च लिखितमस्ति ।

(२) अष्टे-नगरदानीता श्री० शम्भुराव गोविंदराव लिमये इत्येतेषां ग्रन्थसंग्रहात् संप्राप्ता सामवेदसंहितातीव शुद्धा ।

(३) जुनागढात्प्राप्ता श्रीमतां जयन्तीलालदयाराम-त्रिपाठिनां कौथुमी-शाखीयानां संग्रहादानीता परिशुद्धा सामवेद-संहिता ।

(४) वरगुर-नगरे तंजावरप्रान्ते श्री० नागेशरावद्वारा ग्रन्थलिपिकायां मुद्रापितः संहिताग्रन्थो गानग्रन्थाश्च सर्वे । एते ग्रन्थाः कौथुमीशाखाया दाक्षिणात्यपाठप्रणालिकया मुद्रिताः शुद्धाः सन्ति ।

(५) श्रीमतां लक्ष्मण-शंकर-द्रविडानां पुण्यपत्तननिवासिनां राणायणीयशाखाध्यायिनां ग्रन्थसंग्रहादानीता सामवेद-संहिताऽतीव शुद्धा सुपाठा सुपाठ्या च ।

एतान्ग्रन्थानवलोक्य सामवेदस्यास्य कृतं मुद्रणम् ।

## संशोधकाः ।

सामवेदस्यास्य मुद्रणकर्मणि ये संशोधकाः सामवेदाध्यायिनः कौथुमीया राणायणीयाश्च साहाय्यं कृतवन्तस्ते खलु संमाननीया अवश्यमेवाधुना, तेऽमी-

(१) महिशूरवासिनः श्रीमन्तो आस्थानविद्वांसो रा० नारायणस्वामिदीक्षिताः श्रीमन्महाराज-संस्कृत-महापाठशालायां सामवेदाचार्याः कौथुमीयाः ।

(२) बंगलूरनिवासिनः श्रीचामराजेन्द्र-वेदमहापाठशालायां सामवेद-प्रधानाध्यापका आस्थानविद्वांसः श्रीमन्त उत्तरार्काट-मण्डलान्तर्गतचंपेटग्रामाभिजनाः रामचन्द्रदीक्षिताः कौथुमीयाः सामवेदाचार्याः ।

(३) भावनगरीय-गौरीशंकर-वेद-पाठशालायाः सामवेदाचार्यास्त्रिविक्रमजित् (त्रीकमजी)-सुताः प्रभाशंकरास्त्रि-पाठीकुलभूषणाः धोबग्रामनिवासिनः कौथुमीयाः ।

(४) वटोदरपुरीनिवासिनो भाईशंकरपुत्राः नरहरिशंकरशास्त्रिणः सामपाठिनः कौथुमीयाः ।

(५) श्रीमन्तो द्राविडाः शंकरसूनवो लक्ष्मणशर्माणः पुण्यपत्तननिवासिनो राणायणीयाः द्राह्यायणसूत्राध्यायिनः सामगानकुशलाः ।

एभिः सामपाठिभिः सामवेदस्यास्य मुद्रणपत्रसंशोधनकर्मणि सामपाठनिर्णयकर्मणि चातीव साहाय्यं कृतम् । एतेषां सामधुरीणानां महत्या कृपयैतस्य सामवेदस्य मुद्रणं प्रकाशनं च निर्विघ्नतया समाप्तिमगमत् । अतः सर्वे एवैते विद्वांसः सविशेषं संमाननीया अभिनन्दनीयाश्च ।

श्रीमद्भिर्जयन्तिलाल-दयाराम-त्रिपाठिभिर्जुनागडनिवासिभिर्निर्मिताः कतिपया मन्त्रसूच्यो मुद्रणार्थं प्रेषिता आसन् । ताः संवर्ध्योपबृंह्य चात्र परिशिष्टविभागे मुद्रिताः । एतत्कृपाप्रसादार्थं श्रीमन्तो जयन्तिलाल-शर्माणोऽभिनन्दनीयाः ।

एवं परमेश्वरकृपया संशोध्य मुद्राप्य च प्रकाशिता कौथुमीय-संहिता सामवेदस्य राणायणीय-संहिता च, जैमिनीय-संहिता स्वत्रैवान्ते पाठभेदनिदर्शकसूच्या प्रदर्शिता । एषा तु वैदिक-धर्मश्रद्धावतां प्राप्स्यति समादरस्थानमित्याशास्ते ।

औन्धनगरे १८६१ शाकीयस्य (१९९६ संवत्‌ः)
मार्गशीर्षस्य शुद्धैकादश्याम् ।

भट्टाचार्यः श्रीपादशर्मा दामोदरसूनुः
सातवळेकरकुलजः



# सामवेद-संहिता।

## पूर्वार्चिकः (छन्द आर्चिकः)

### आग्नेयं काण्डम्।

### अथ प्रथमोऽध्यायः।

अथ प्रथमप्रपाठके प्रथमोऽर्धः।

[१]

(१-१०) १-२, ४, ७, ९ भरद्वाजो बार्हस्पत्यः, ३ मेधातिथिः काण्वः, ५ उशनाः काव्यः, ६ सुदीति-पुरुमीढावाङ्गिरसौ तयोर्वान्यतरः, ८ वत्सः काण्वः, १० वामदेवः ॥ अग्निः ॥ गायत्री ॥

(ऋग्वेदे) (सामवेदे)

१ अग्न आ याहि वीतये गृणानो हव्यदातये।
नि होता सत्सि बर्हिषि ॥ १ ॥ ६।१६।१० ६६०

२ त्वमग्ने यज्ञानां होता विश्वेषां हितः।
देवेभिर्मानुषे जने ॥ २ ॥ ६।१६।१ १४७४

३ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम्।
अस्य यज्ञस्य सुक्रतुम् ॥ ३ ॥ १।१२।१ ७९०

४ अग्निर्वृत्राणि जङ्घनद् द्रविणस्युर्विपन्यया।
समिद्धः शुक्र आहुतः ॥ ४ ॥ ६।१६।३४ १३९६

५ प्रेष्ठं वो अतिथिं स्तुषे मित्रमिव प्रियम्।
अग्ने रथं न वेद्यम् ॥ ५ ॥ ८।८४।१ १२४७

६ त्वं नो अग्ने महोभिः पाहि विश्वस्या अरातेः।
उत द्विषो मर्त्यस्य ॥ ६ ॥ ८।७१।१

(ऋग्वेदे) (सामवेदे)

७ एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः ।
एभिर्वर्धास इन्दुभिः ॥७॥ ६।१६।१६ ७०५

८ आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात् ।
अग्ने त्वां कामये गिरा ॥८॥ ८।११।७ ११६६

९ त्वामग्ने पुष्करादध्यथर्वा निरमन्थत ।
मूर्ध्नो विश्वस्य वाघतः ॥९॥ ६।१६।१३

१० अग्ने विवस्वदा भरास्मभ्यमूतये महे ।
देवो ह्यसि नो दृशे ॥१०॥ (१) ( न ऋग्वेदीयः )

स्वरिताः ९ । उ० ना० । धा० ३७ । बे ॥

इति प्रथमा दशतिः ॥१॥ प्रथमः खण्डः ॥१॥

[ २ ]

(१-१०) १ आयुङ्क्ष्वाहिः ( ऋ० विरूप आङ्गिरसः ); २ वामदेवो गौतमः; ३, ८-९ प्रयोगो भार्गवः; ४ मधुच्छन्दा वैश्वामित्रः; ५, ७ शुनःशेप आजीगर्तिः; ६ मेधातिथिः काण्वः; १० वत्सः काण्वः ॥ अग्निः ॥ गायत्री ॥

११ नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः ।
अमैरमित्रमर्दय ॥१॥ ८।७५।१० १६४८

१२ दूतं वो विश्ववेदसं हव्यवाहममर्त्यम् ।
यजिष्ठमृञ्जसे गिरा । ॥२॥ ४।८।१

१३ उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः ।
वायोरनीके अस्थिरन् ।३॥ ८।१०२।१३ १५७०

१४ उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम् ।
नमो भरन्त एमसि ॥४॥ १।१।७

१५ जराबोध तद्विविड्ढि विशेविशे यज्ञियाय ।
स्तोमं रुद्राय दृशीकम् ॥५॥ १।२७।१० १६६३

(ऋग्वेदे) (सामवेदे)

१६ प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे ।
मरुद्भिरग्न आ गहि ॥ ६ ॥ १।१९।१

१७ अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः ।
सम्राजन्तमध्वराणाम् ॥ ७ ॥ १।२७।१ १६३४

१८ और्वभृगुवच्छुचिमप्नवानवदा हुवे ।
अग्निं समुद्रवाससम् ॥ ८ ॥ ८।१०२।४

१९ अग्निमिन्धानो मनसा धियं सचेत मर्त्यः ।
अग्निमिन्धे विवस्वभिः ॥ ९ ॥ ८।१०२।२२

२० आदित्प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरम् ।
परो यदिध्यते दिवि ॥१०॥ ८।६।३०

स्व० ६। उ० २। धा० ५२। खा ॥

इति द्वितीया दशतिः ॥२॥ द्वितीयः खण्डः ॥२॥

[३]

( १-१४ ) १ प्रयोगो भार्गवः; २, ५ भरद्वाजो बार्हस्पत्यः; ३, १० वामदेवो गौतमः; ४, ६ वसिष्ठो मैत्रावरुणिः; ७ विरूप आङ्गिरसः; ८ शुनःशेप आजीगर्तिः; ९ गोपवन आत्रेयः; ११ प्रस्कण्वः काण्वः; १२ मेधातिथिः काण्वः; १३ सिन्धुद्वीप आम्बरीषः, त्रित आत्यो वा; १४ उशना काव्यः ॥ अग्निः ॥ गायत्री ॥

२१ अग्निं वो वृधन्तमध्वराणां पुरूतमम् ।
अच्छा नप्त्रे सहस्वते ॥ १ ॥ ८।१०२।७ ९४६

२२ अग्निस्तिग्मेन शोचिषा यंसद्विश्वं न्य१त्रिणम् ।
अग्निर्नो वंसते रयिम् ॥ २ ॥ ६।१६।२८

२३ अग्ने मृड महाँ अस्यय आ देवयुं जनम् ।
इयेथ बर्हिरासदम् । ॥ ३ ॥ ४।९।१

२४ अग्ने रक्षा णो अंहसः प्रति स्म देव रीषतः ।
तपिष्ठैरजरो दह ॥ ४ ॥ ७।१५।१३

(ऋग्वेदे) (सामवेदे)

२५ अग्ने युङ्क्ष्वा हि ये तवाश्वासो देव साधवः ।
अरं वहन्त्याशवः ॥ ५ ॥ ६।१६।४३

२६ नि त्वा नक्ष्य विश्पते द्युमन्तं धीमहे वयम् ।
सुवीरमग्न आहुत ॥ ६ ॥ ७।१५।७

२७ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् ।
अपां रेतांसि जिन्वति ॥ ७ ॥ ८।४४।१६

२८ इममू षु त्वमस्माकं सनिं गायत्रं नव्यांसम् ।
अग्ने देवेषु प्र वोचः ॥ ८ ॥ १।२७।४ १४९७

२९ तं त्वा गोपवनो गिरा जनिष्ठदग्ने अङ्गिरः ।
स पावक श्रुधी हवम् ॥ ९ ॥ ८।७४।११

३० परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् ।
दधद्रत्नानि दाशुषे ॥१०॥ ४।१५।३

३१ उदु त्यं जातवेदसं देवं वहन्ति केतवः ।
दृशे विश्वाय सूर्यम् ॥११॥ १।५०।१

३२ कविमग्निमुप स्तुहि सत्यधर्माणमध्वरे ।
देवममीवचातनम् ॥१२॥ १।१२।७

३३ शं नो देवीरभिष्टये शं नो भवन्तु पीतये ।
शं योरभि स्रवन्तु नः ॥१३॥ १०।९।४

३४ कस्य नूनं परीणसि धियो जिन्वसि सत्पते ।
गोषाता यस्य ते गिरः ॥१४॥ ८।८४।७

स्व० ९ । उ० २ । धा० ५७ । धे ॥

इति तृतीया दशतिः ॥३॥ तृतीयः खण्डः ॥३॥

[ ४ ]

(१-१०) १,३,७ शंयुर्बार्हस्पत्यः ( ७ तृणपाणिः ); २,५,८-९ भर्गः प्रागाथः; ४ वसिष्ठोः मैत्रावरुणिः; ६ प्रस्कण्वः काण्वः; १० सोभरिः काण्वः ॥ अग्निः ॥ बृहती ॥

(ऋग्वेदे) (सामवेदे)

३५ यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे ।
प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम् ॥ १ ॥ ६।४८।१ ७०३

३६ पाहि नो अग्न एकया पाह्यू३त द्वितीयया ।
पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो ॥ २ ॥ ८।६०।९ १५४४

३७ बृहद्भिरग्ने अर्चिभिः शुक्रेण देव शोचिषा ।
भरद्वाजे समिधानो यविष्ठ्य रेवत्पावक दीदिहि ॥ ३ ॥ ६।४८।७

३८ त्वे अग्ने स्वाहुत प्रियासः सन्तु सूरयः ।
यन्तारो ये मघवानो जनानामूर्वं दयन्त गोनाम् ॥ ४ ॥ ७।१६।७

३९ अग्ने जरितर्विश्पतिस्तपानो देव रक्षसः ।
अप्रोषिवान् गृहपते महाँ असि दिवस्पायुर्दुरोणयुः ॥ ५ ॥ ८।६०।१९

४० अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य ।
आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः ॥ ६ ॥ १।४४।१ १७८०

४१ त्वं नश्चित्र ऊत्या वसो राधांसि चोदय ।
अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः ॥ ७ ॥ ६।४८।५ १६२३

४२ त्वमित्सप्रथा अस्यग्ने त्रातर्ऋतः कविः ।
त्वां विप्रासः समिधान दीदिव आ विवासन्ति वेधसः ॥ ८ ॥ ८।६०।५

४३ आ नो अग्ने वयोवृधं रयिं पावक शंस्यम् ।
रास्वा च न उपमाते पुरुस्पृहं सुनीती सुयशस्तरम् ॥ ९ ॥ ८।६०।११

४४ यो विश्वा दयते वसु होता मन्द्रो जनानाम् ।
मधोर्न पात्रा प्रथमान्यस्मै प्र स्तोमा यन्त्वग्नये ॥१०॥ ८।१०३।६ १५६३

स्व० ९ । उ० ३ । धा० ८३ । दी ॥

इति चतुर्थी दशतिः ॥४॥ चतुर्थः खण्डः ॥४॥

[५]

( १-१० ) १ वसिष्ठो मैत्रावरुणिः; २ भर्गः प्रागाथः; ३, ७ सौभरिः काण्वः; ४ मनुर्वैवस्वतः; ५ सुदीतिपुरूमीळावांगिरसौ; ६ प्रस्कण्वः काण्वः; ८ मेधातिमेध्यातिथी काण्वौ; ९ विश्वामित्रो गाथिनः; १० कण्वो घौरः ॥ अग्निः, ८ इन्द्रः ॥ बृहती ॥

(ऋग्वेदे) (सामवेदे)

४५ एना वो अग्निं नमसोर्जो नपातमा हुवे ।
प्रियं चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतम् ॥ १ ॥ ७।१६।१ ७४९

४६ शेषे वनेषु मातृषु सं त्वा मर्तास इन्धते ।
अतन्द्रो हव्यं वहसि हविष्कृत आदिद्देवेषु राजसि ॥ २ ॥ ८।६०।१५

४७ अदर्शि गातुवित्तमो यस्मिन्व्रतान्यादधुः ।
उपो षु जातमार्यस्य वर्धनमग्निं नक्षन्तु नो गिरः ॥ ३ ॥ ८।१०३।१ १५१५

४८ अग्निरुक्थे पुरोहितो ग्रावाणो बर्हिरध्वरे ।
ऋचा यामि मरुतो ब्रह्मणस्पते देवा अवो वरेण्यम् ॥ ४ ॥ ८।२७।१

४९ अग्निमीडिष्वावसे गाथाभिः शीरशोचिषम् ।
अग्निं राये पुरुमीढ श्रुतं नरोऽग्निः सुदीतये छर्दिः ॥ ५ ॥ ८।७१।१४

५० श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः ।
आ सीदतु बर्हिषि मित्रो अर्यमा प्रातर्यावभिरध्वरे ॥ ६ ॥ १।४४।१३

५१ प्र दैवोदासो अग्निर्देव इन्द्रो न मज्मना ।
अनु मातरं पृथिवीं वि वावृते तस्थौ नाकस्य शर्मणि ॥ ७ ॥ ८।१०३।२ १५१७

५२ अध ज्मो अध वा दिवो बृहतो रोचनादधि ।
अया वर्धस्व तन्वा गिरा ममा जाता सुक्रतो पृण ॥ ८ ॥ ८।१।१८

५३ कायमानो वना त्वं यन्मातॄरजगन्नपः ।
न तत्ते अग्ने प्रमृषे निवर्तनं यद् दूरे सन्निहाभुवः ॥ ९ ॥ ३।९।२

५४ नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते ।
दीदेथ कण्व ऋतजात उक्षितो यं नमस्यन्ति कृष्टयः ॥१०॥ १।३६।१९

इति पञ्चमी दशतिः ॥५॥ पञ्चमः खण्डः ॥५॥ स्व० ३० ६ धा० ७१ । बा ॥



इति प्रथमप्रपाठके प्रथमोऽर्धः ॥ १ ॥

[ ६ ]

( १-८ ) १, ७ वसिष्ठो मैत्रावरुणिः; २, ३, ५ कण्वो घौरः; ४ सौभरिः काण्वः; ६ उत्कीलः कात्यः; ८ विश्वामित्रो गाथिनः ॥ अग्निः, २ ब्रह्मणस्पतिः; ३ यूपः ॥ बृहती ॥

अथ प्रथमप्रपाठकस्य द्वितीयोऽर्धः ॥ १ ॥

५५ देवो वो द्रविणोदाः पूर्णां विवष्ट्वासिचम् । (ऋग्वेदे) (सामवेदे)
उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहते ॥ १ ॥ ७।१६।११ १५१३

५६ प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता ।
अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥ २ ॥ १।४०।३

५७ ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता ।
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥ ३ ॥ १।३६।१३

५८ प्र यो राये निनीषति मर्तो यस्ते वसो दाशत् ।
स वीरं धत्ते अग्न उक्थशंसिनं त्मना सहस्रपोषिणम् ॥ ४ ॥ ८।१०३।४

५९ प्र वो यह्वं पुरूणां विशां देवयतीनाम् ।
अग्निं सूक्तेभिर्वचोभिर्वृणीमहे यं समिदन्य इन्धते ॥ ५ ॥ १।३६।१

६० अयमग्निः सुवीर्यस्येशे हि सौभगस्य ।
राय ईशे स्वपत्यस्य गोमत ईशे वृत्रहथानाम् ॥ ६ ॥ ३।१६।१

६१ त्वमग्ने गृहपतिस्त्वं होता नो अध्वरे ।
त्वं पोता विश्ववार प्रचेता यक्षि यासि च वार्यम् ॥ ७ ॥ ७।१६।५

६२ सखायस्त्वा ववृमहे देवं मर्तास ऊतये ।
अपां नपातं सुभगं सुदंससं सुप्रतूर्तिमनेहसम् ॥ ८ ॥ ३।९।१

॥ स्व०११ । उ०२ । धा० ५७ । ख ॥

इति षष्ठी दशतिः ॥ ६ ॥ षष्ठः खण्डः ॥ ६ ॥

[७]

(१-१०) १ श्यावाश्वो वामदेवो वा; २ उपस्तुतो वार्हिष्टव्यः; ३ बृहदुक्थो वामदेव्यः; ४ कुत्स आंगिरसः; ५-६ भरद्वाजो बार्हस्पत्यः; ७ वामदेवो गौतमः; ८, १० वसिष्ठो मैत्रावरुणिः; ९ त्रिशिरास्त्वाष्ट्रः ॥
१,३,५,९ त्रिष्टुप्; २, ४ जगती; १० त्रिपाद्विराड्गायत्री ॥

६३ आ जुहोता हविषा मर्जयध्वं नि होतारं गृहपतिं दधिध्वम्। (ऋग्वेदे) (सामवेदे)
इडस्पदे नमसा रातहव्यं सपर्यता यजतं पस्त्यानाम् ॥ १ ॥
६४ चित्र इच्छिशोस्तरुणस्य वक्षथो न यो मातरावन्वेति धातवे।
अनूधा यदजीजनदधा चिदा ववक्षत्सद्यो महि दूत्यां३ चरन् ॥२॥ १०।११५।१
६५ इदं त एकं पर उ त एकं तृतीयेन ज्योतिषा सं विशस्व।
संवेशनस्तन्वे३ चारुरेधि प्रियो देवानां परमे जनित्रे ॥ ३ ॥ १०।५६।१
६६ इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया।
भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ॥ ४ ॥ १।९४।१
६७ मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्।
कविं सम्राजमतिथिं जनानामासन्नः पात्रं जनयन्त देवाः ॥ ५ ॥ ६।७।१; ११४०
६८ वि त्वदापो न पर्वतस्य पृष्ठादुक्थेभिरग्ने जनयन्त देवाः।
तं त्वा गिरः सुष्टुतयो वाजयन्त्याजिं न गिर्ववाहो जिग्युरश्वाः ॥ ६ ॥ ६।२४।६
६९ आ वो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः।
अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥ ७ ॥ ४।३।१
७० इन्धे राजा समर्यो नमोभिर्यस्य प्रतीकमाहुतं घृतेन।
नरो हव्येभिरीडते सबाध आग्निरग्रमुषसामशोचि ॥ ८ ॥ ७।८।१
७१ प्र केतुना बृहता यात्यग्निरा रोदसी वृषभो रोरवीति।
दिवश्चिदन्तादुपमामुदानडपामुपस्थे महिषो ववर्ध ॥ ९ ॥ १०।८।१
७२ अग्निं नरो दीधितिभिररण्योर्हस्तच्युतं जनयत प्रशस्तम्।
दूरेदृशं गृहपतिमथव्युम् ॥ १० ॥ ७।१।१; १३७३

स्व० १५। उ० ८। धा० १०४ ॥ वी ॥

इति सप्तमी दशतिः, सप्तमः खण्डः ॥ ७ ॥

[८]

(१-८) १ बुधगविष्ठिरावात्रेयौ; २, ५ वत्सप्रिर्भालन्दनः; ३ भरद्वाजो बार्हस्पत्यः;
४, ७ विश्वामित्रो गाथिनः; ६ वसिष्ठो मैत्रावरुणिः; ८ पायुर्भारद्वाजः ॥
अग्निः, ३ पूषा ॥ त्रिष्टुप् ॥

(ऋग्वेदे) (सामवेदे)

७३ अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।
यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सस्रते नाकमच्छ ॥ १ ॥ ५।१।१ १७४६
७४ प्र भूर्जयन्तं महां विपोधां मूरैरमूरं पुरां दर्माणम् ।
नयन्तं गीर्भिर्वना धियं धा हरिश्मश्रुं न वर्मणा धनर्चिम् ॥ २ ॥ १०।४६।५
७५ शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावन्भद्रा ते पूषन्निह रातिरस्तु ॥ ३ ॥ ६।५८।१
७६ इडामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ ४ ॥ ३।६।११
७७ प्र होता जातो महान्नभोविन्नृषद्मा सीददपां विवर्ते ।
दधद्यो धायि सुते वयांसि यन्ता वसूनि विधते तनूपाः ॥ ५ ॥ १०।४६।१
७८ प्र सम्राजमसुरस्य प्रशस्तं पुंसः कृष्टीनामनुमाद्यस्य ।
इन्द्रस्येव प्र तवसस्कृतानि वन्दद्वारा वन्दमाना विवष्टु ॥ ६ ॥ ७।६।१
७९ अरण्योर्निहितो जातवेदा गर्भ इवेत्सुभृतो गर्भिणीभिः ।
दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥ ७ ॥ ३।२९।२
८० सनादग्ने मृणसि यातुधानान्न त्वा रक्षांसि पृतनासु जिग्युः ।
अनु दह सहमूरान्कयादो मा ते हेत्या मुक्षत दैव्यायाः ॥ ८ ॥ १०।८७।१९

स्व० १३ । उ० १ । धा० ६ ॥ टौ ॥

इति अष्टमी दशतिः ॥८॥ अष्टमः खण्डः ॥८॥

[९]

( १-१० ) १ गय आत्रेयः; २ वामदेवः; ३, ४ भरद्वाजो बार्हस्पत्यः; ५ द्वितो मृक्तवाहा आत्रेयः; ६ वसूयव आत्रेयाः; ७, ९ गोपवन आत्रेयः; ८ पूरुरात्रेयः; १० वामदेवः, कश्यपो वा मारीचो, मनुर्वा वैवस्वत, उभौ वा ॥ अग्निः ॥ अनुष्टुप् ॥

(ऋग्वेदे) (सामवेदे)

८१ अग्न ओजिष्ठमा भर द्युम्नमस्मभ्यमध्रिगो ।
प्र नो राये पनीयसे रत्सि वाजाय पन्थाम् ॥ १ ॥ ५।१०।१

८२ यदि वीरो अनु ष्यादग्निमिन्धीत मर्त्यः ।
आजुह्वद्धव्यमानुषक् शर्म भक्षीत दैव्यम् ॥ २ ॥ (न ऋग्वेदीयः)

८३ त्वेषस्ते धूम ऋण्वति दिवि सं च्छुक्र आततः ।
सूरो न हि द्युता त्वं कृपा पावक रोचसे ॥ ३ ॥ ६।२।६

८४ त्वं हि क्षैतवद्यशोऽग्ने मित्रो न पत्यसे ।
त्वं विचर्षणे श्रवो वसो पुष्टिं न पुष्यसि ॥ ४ ॥ ६।२।१

८५ प्रातरग्निः पुरुप्रियो विश स्तवेतातिथिः ।
विश्वे यस्मिन्नमर्त्ये हव्यं मर्तास इन्धते ॥ ५ ॥ ५।१८।१

८६ यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो ।
महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ॥ ६ ॥ ५।२५।७

८७ विशोविशो वो अतिथिं वाजयन्तः पुरुप्रियम् ।
अग्निं वो दुर्यं वचः स्तुषे शूषस्य मन्मभिः ॥ ७ ॥ ८।७४।१; १५६४

८८ बृहद्वयो हि भानवेऽर्चा देवायाग्नये ।
यं मित्रं न प्रशस्तये मर्तासो दधिरे पुरः । ॥ ८ ॥ ५।१६।१

८९ अगन्म वृत्रहन्तमं ज्येष्ठमग्निमानवम् ।
य स्म श्रुतर्वन्नार्क्ष्ये बृहदनीक इध्यते । ॥ ९ ॥ ८।७४।४

९० जातः परेण धर्मणा यत्सवृद्भिः सहाभुवः ।
पिता यत्कश्यपस्याग्निः श्रद्धा माता मनुः कविः ॥१०॥ (न ऋग्वेदीयः)

स्व० १४ । उ० ७ । धा० ५१ ॥ थ ॥

इति नवमी दशतिः ॥ ९ ॥ नवमः खण्डः ॥ ९ ॥

[ १० ]

( १-६ ) १ अग्निस्तापसः; २, ३ वामदेवः कश्यपः, असितो देवलो वा; ४ सोमाहुतिर्भार्गवः;
५ पायुर्भारद्वाजः; ६ प्रस्कण्वः काण्वः ॥ अग्निः, १ विश्वेदेवाः; २ अङ्गिराः ॥ अनुष्टुप् ॥

(ऋग्वेदे) (सामवेदे)

९१ सोमं राजानं वरुणमग्निमन्वारभामहे ।
आदित्यं विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ॥ १ ॥ १०।१४१।३

९२ इत एत उदारुहन्दिवः पृष्ठान्या रुहन् ।
प्र भूर्जयो यथा पथोद्यामङ्गिरसो ययुः ॥ २ ॥ (न ऋग्वेदीयः)

९३ राये अग्ने महे त्वा दानाय समिधीमहि ।
ईडिष्वा हि महे वृषं द्यावा होत्राय पृथिवी ॥ ३ ॥ (न ऋग्वेदीयः)

९४ दधन्वे वा यदीमनु वोचद्ब्रह्मेति वेरु तत् ।
परि विश्वानि काव्या नेमिश्चक्रमिवाभुवत् ॥ ४ ॥ २।५।३

९५ प्रत्यग्ने हरसा हरः शृणाहि विश्वतस्परि ।
यातुधानस्य रक्षसो बलं न्युब्जवीर्यम् ॥ ५ ॥ १०।८७।२५

९६ त्वमग्ने वसूँरिह रुद्राँ आदित्याँ उत ।
यजा स्वध्वरं जनं मनुजातं घृतप्रुषम् ॥ ६ ॥ १।४५।१

॥ स्व० ४ । उ० ३ । धा० २० । दौ ।

॥ इति प्रथमप्रपाठके द्वितीयोऽर्धः प्रथमः प्रपाठकश्च समाप्तः ॥१॥

इति दशमी दशतिः ॥१०॥ दशमः खण्डः ॥१०॥

अथ द्वितीयप्रपाठके प्रथमोऽर्धः ॥

[ १ ]

(१-१०) दीर्घतमा औचथ्यः; २, ४ विश्वामित्रो गाथिनः, ३ गोतमो राहूगणः; ५ त्रित आप्त्यः;
६ इरिम्बिठिः काण्वः; ७, ८, १० विश्वमना वैयश्वः; ९ ऋजिश्वा भारद्वाजः ॥ अग्निः;
५ पवमानः सोमः; ६ अदितिः; ९ विश्वे देवाः ॥ उष्णिक् ॥

९७ पुरु त्वा दाशिवाँ वोचेऽरिरग्ने तव स्विदा ।
तोदस्येव शरण आ महस्य ॥ १ ॥ १।१५०।१

९८ प्र होत्रे पूर्व्यं वचोऽग्नये भरता बृहत् ।
विपां ज्योतींषि बिभ्रते न वेधसे ॥ २ ॥ ३।१०।५

(ऋग्वेदे) (सामवेदे)

९९ अग्ने वाजस्य गोमत ईशान सहसो यहो।
अस्मे देहि जातवेदो महि श्रवः ॥३॥ १।७९।४ १५६१

१०० अग्ने यजिष्ठो अध्वरे देवां देवयते यज।
होता मन्द्रो वि राजस्यति स्रिधः ॥४॥ ३।१०।७

१०१ जज्ञानः सप्त मातृभिर्मेधामाशासत श्रिये।
अयं ध्रुवो रयीणां चिकेतदा ॥५॥ ९।१०२।४

१०२ उत स्या नो दिवा मतिरदितिरूत्यागमत्।
सा शन्ताता मयस्करदप स्रिधः ॥६॥ ८।१८।७

१०३ ईडिष्वा हि प्रतीव्यां३ यजस्व जातवेदसम्।
चरिष्णुधूममगृभीतशोचिषम् ॥७॥ ८।२३।१

१०४ न तस्य मायया च न रिपुरीशीत मर्त्यः।
यो अग्नये ददाश हव्यदातये ॥८॥ ८।२३।१५

१०५ अप त्यं वृजिनं रिपुं स्तेनमग्ने दुराध्यम्।
दविष्ठमस्य सत्पते कृधी सुगम् ॥९॥ ६।५१।१३

१०६ श्रुष्ट्यग्ने नवस्य मे स्तोमस्य वीर विश्पते।
नि मायिनस्तपसा रक्षसो दह ॥१०॥ ८।२३।१४

स्व० ९। उ० ३। धा० ४२॥ दा॥

इति प्रथमा दशतिः ॥१॥ एकादशः खण्डः ॥११॥

[२]

(१-८) १ प्रयोगो भार्गवः (ऋ० सौभरिः काण्वः); २, ३, ५-७ सौभरिः काण्वः; ४ प्रयोगो भार्गवः सौभरिः काण्वो वा; ८ विश्वमना वैयश्वः॥
अग्निः॥ उष्णिक्॥

१०७ प्र मंहिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे।
उपस्तुतासो अग्नये ॥१॥ ८।१०३।८ ८७८

| | | ऋग्वेदे | सामवेदे |
|---|---|---|---|
| १०८ प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्मभिः । यस्य त्वं सख्यमाविथ | ॥ २ ॥ | ८।१९।३० | १८२२ |
| १०९ तं गूर्धया स्वर्णरं देवासो देवमरतिं दधन्विरे । देवत्रा हव्यमूहिषे | ॥ ३ ॥ | ८।१९।१ | १६८७ |
| ११० मा नो हृणीथा अतिथिं वसुरग्निः पुरुप्रशस्त एषः । यः सुहोता स्वध्वरः | ॥ ४ ॥ | ८।१०३।१२ | |
| १११ भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः । भद्रा उत प्रशस्तयः | ॥ ५ ॥ | ८।१९।१९ | १५५९ |
| ११२ यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम् । अस्य यज्ञस्य सुक्रतुम् | ॥ ६ ॥ | ८।१९।३ | |
| ११३ तदग्ने द्युम्नमा भर यत्सासाहा सदने कं चिदत्रिणम् । मन्युं जनस्य दूढ्यम् | ॥ ७ ॥ | ८।१९।१५ | |
| ११४ यद्वा उ विश्पतिः शितः सुप्रीतो मनुषो विशे । विश्वेदग्निः प्रति रक्षांसि सेधति | ॥ ८ ॥ | ८।२३।१३ | |

स्व० १२ । उ० २ । धा० ४४ । छी ॥

इति द्वितीया दशतिः ॥२॥ द्वादशः खण्डः ॥१२॥

इत्याग्नेयं पर्व काण्डम् वा ॥ इति प्रथमोऽध्यायः ॥ इति प्रथमं पर्व ॥

## अग्नेयकाण्डस्य मन्त्रसंख्या ११४

| | | |
|---|---|---|
| गायत्र्यः | ३४ | (१-३४) |
| बृहत्यः | २८ | (३५-६२) |
| त्रिष्टुभः | १८ | (६३-८०) |
| अनुष्टुभः | १६ | (८१-९६) |
| उष्णिहः | १८ | (९७-११४) |
| | ११४ | |

# अथ ऐन्द्रं काण्डम् ।

## अथ द्वितीयोऽध्यायः ।

[ ३ ]

( १-१० ) १ शंयुर्बार्हस्पत्यः; २ श्रुतकक्षः सुकक्षो वा आंगिरसः; ३ हर्यतः प्रागाथः; ४, ५ श्रुतकक्षः ( ऋ० सुकक्षो वा, ५ सुकक्षः ) आंगिरसः; ६ देवजामय इन्द्रमातरः ऋषिकाः; ७, ८ गोषूक्त्यश्वसूक्तिनौ काण्वायनौ; ९, १० मेधातिथिः काण्वः प्रियमेधश्चांगिरसः ॥ इन्द्रः ( ऋ०३ अग्निर्हर्वींषि वा )

॥ गायत्री ॥

| | | (ऋग्वेदे) | (सामवेदे) |
|---|---|---|---|
| ११५ तद्वो गाय सुते सचा पुरुहूताय सत्वने ।<br>शं यद्गवे न शाकिने | ॥ १ ॥ | ६।४५।२२ | १६६६ |
| ११६ यस्ते नूनं शतक्रतविन्द्र द्युम्नितमो मदः ।<br>तेन नूनं मदे मदेः | ॥ २ ॥ | ८।९२।१६ | |
| ११७ गाव उप वदावटे मही यज्ञस्य रप्सुदा ।<br>उभा कर्णा हिरण्यया | ॥ ३ ॥ | ८।७२।१२ | १६०२ |
| ११८ अरमश्वाय गायत श्रुतकक्षारं गवे ।<br>अरमिन्द्रस्य धाम्ने | ॥ ४ ॥ | ८।९२।२५ | |
| ११९ तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे ।<br>स वृषा वृषभो सुवत् | ॥ ५ ॥ | ८।९३।७ | १२२२ |
| १२० त्वमिन्द्र बलादधि सहसो जात ओजसः ।<br>त्वं सन्वृषन्वृषेदसि | ॥ ६ ॥ | १०।१५३।२ | |
| १२१ यज्ञ इन्द्रमवर्धयद्यद्भूमिं व्यवर्तयत् ।<br>चक्राण ओपशं दिवि | ॥ ७ ॥ | ८।१४।५ | १६३९ |
| १२२ यदिन्द्राहं यथा त्वमीशीय वस्व एक इत् ।<br>स्तोता मे गोसखा स्यात् | ॥ ८ ॥ | ८।१४।१ | १८३४ |

१२३ पन्यंपन्यमित्सोतार आ धावत मद्याय । (ऋग्वेदे) (सामवेदे)
सोमं वीराय शूराय ॥९॥ ८।२।२५ १६५७

१२४ इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम् ।
अनाभयिन्ररिमा ते ॥१०॥ ८।२।१ ७३४

स्व० १० । उ० ४ । धा० ४६ । भू ॥

इति तृतीया दशतिः ॥३॥ प्रथमः खण्डः ॥१॥

(४)

(१-१०) १, २ सुकक्षश्रुतकक्षौ ( ऋ० सुकक्ष आंगिरसः ); ३ भारद्वाजः ( ऋ० शंयुर्बार्हस्पत्यः ); ४ श्रुतकक्षः ( ऋ० सुकक्षो वा आंगिरसः ) । ५, ६ मधुच्छन्दा वैश्वामित्रः; ७, ९, १० त्रिशोकः काण्वः; ८ वसिष्ठोः मैत्रावरुणिः ॥ इन्द्रः ( ९ ऋ० अग्नीन्द्रौ ) ॥ गायत्री ॥

१२५ उद्घेदभि श्रुतामघं वृषभं नर्यापसम् ।
अस्तारमेषि सूर्य ॥ १ ॥ ८।९३।१ १४५०

१२६ यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य ।
सर्वं तदिन्द्र ते वशे ॥ २ ॥ ८।९३।४

१२७ य आनयत्परावतः सुनीती तुर्वशं यदुम् ।
इन्द्रः स नो युवा सखा ॥ ३ ॥ ६।४५।१

१२८ मा न इन्द्राभ्या३ दिशः सूरो अक्तुष्वा यमत ।
त्वा युजा वनेम तत् ॥ ४ ॥ ८।९२।३१

१२९ एन्द्र सानसिं रयिं सजित्वानं सदासहम् ।
वर्षिष्ठमूतये भर ॥ ५ ॥ १।८।१

१३० इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे ।
युजं वृत्रेषु वज्रिणम् ॥ ६ ॥ १।७।५

१३१ अपिबत्कद्रुवः सुतमिन्द्रः सहस्रबाह्वे ।
तत्रादददिष्ट पौंस्यम् ॥ ७ ॥ ८।४५।२६

(ऋग्वेदे) (सामवेदे)

१३२ वयमिन्द्र त्वायवोऽभि प्र णोनुमो वृषन् ।
विद्धी त्वा३स्य नो वसो ॥ ८ ॥ ७।३१।४

१३३ आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् ।
येषामिन्द्रो युवा सखा ॥ ९ ॥ ८।४५।१ १३३८

१३४ भिन्धि विश्वा अप द्विषः परि बाधो जही मृधः ।
वसु स्पार्हं तदा भर ॥१०॥ ८।४५।४० १०७०

ख० ८ । उ० ३ । धा० ३२ । डा ॥

इति चतुर्थी दशतिः ॥ ४ ॥ द्वितीयः खण्डः ॥ २ ॥

॥ ५ ॥

(१-१०) १ कण्वो घौरः; २ त्रिशोकः काण्वः; ३ वत्सः काण्वः; ४ कुसीदी काण्वः; ५ मेधातिथिः काण्वः; ६ श्रुतकक्षः ( ऋ० सुकक्षः ) आंगिरसः ७ श्यावाश्व आत्रेयः; ८ प्रगाथः काण्वः; ९ वत्सः काण्वः; १० इरिंबिठिः काण्वः ॥ इन्द्रः (ऋ० १ मरुतः; ४ विश्वे देवाः; ५ ब्रह्मणस्पतिः; ७ सविता) ॥ गायत्री ॥

१३५ इहेव शृण्व एषां कशा हस्तेषु यद्वदान् ।
नि यामं चित्रमृञ्जते ॥ १ ॥ १।३७।३

१३६ इम उ त्वा वि चक्षते सखाय इन्द्र सोमिनः ।
पुष्टावन्तो यथा पशुम् ॥ २ ॥ ८।४५।१६

१३७ समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः ।
समुद्रायेव सिन्धवः ॥ ३ ॥ ८।६।४ १६५१

१३८ देवानामिदवो महत्तदा वृणीमहे वयम् ।
वृष्णामस्मभ्यमूतये ॥ ४ ॥ ८।८३।१

१३९ सोमानां स्वरणं कृणुहि ब्रह्मणस्पते ।
कक्षीवन्तं य औशिजः ॥ ५ ॥ १।१८।१ १४६३

१४० बोधन्मना इदस्तु नो वृत्रहा भूर्यासुतिः ।
शृणोतु शक्र आशिषम् ॥ ६ ॥ ८।९३।१८

(ऋग्वेदे) (सामवेदे)

१४१ अद्या नो देव सवितः प्रजावत्सावीः सौभगम् ।
परा दुःष्वप्न्यं सुव ॥ ७ ॥ ५।८२।४

१४२ क्व३स्य वृषभो युवा तुविग्रीवो अनानतः ।
ब्रह्मा कस्तं सपर्यति ॥ ८ ॥ ८।६४।७

१४३ उपह्वरे गिरीणां सङ्गमे च नदीनाम् ।
धिया विप्रो अजायत ॥ ९ ॥ ८।६।२८

१४४ प्र सम्राजं चर्षणीनामिन्द्रं स्तोता नव्यं गीर्भिः ।
नरं नृषाहं मंहिष्ठम् ॥१०॥ ८।१६।१

स्व० ९ । उ० ना । धा० ४४ । ली ॥

इति पञ्चमी दशतिः ॥५॥ तृतीयः खण्डः ॥३॥

॥ इति द्वितीयप्रपाठके प्रथमोऽर्धः ॥१॥

[ ६ ]

( १-१० ) १ श्रुतकक्षः ( ऋ० सुकक्षः ) आङ्गिरसः; २ मेधातिथिः ( ऋ० शंयुर्बार्हस्पत्यः ) काण्वः; ३ गोतमो राहूगणः; ४ भरद्वाजो बार्हस्पत्यः; ५ बिन्दुः पूतदक्षो वा आङ्गिरसः; ६, ७ श्रुतकक्षः सुकक्षो वा ( ऋ० सुकक्षः ) आङ्गिरसः; ८ वत्सः काण्वः; ९ शुनःशेप आजीगर्तिः; १० शुनःशेपो आजीगर्तिः; वामदेवो वा ॥ इन्द्रः, (४ ऋ० इन्द्रापूषणौ) ५ मरुतः ॥ गायत्री ॥

१४५ अपादु शिप्र्यन्धसः सुदक्षस्य प्रहोषिणः ।
इन्दोरिन्द्रो यवाशिरः ॥ १ ॥ ८।९२।४

१४६ इमा उ त्वा पुरूवसोऽभि प्र नोनुवुर्गिरः ।
गावो वत्सं न धेनवः ॥ २ ॥ ६।४५।२५

१४७ अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् ।
इत्था चन्द्रमसो गृहे ॥ ३ ॥ १।८४।१५ ९१५

१४८ यदिन्द्रो अनयद्रितो महीरपो वृषन्तमः ।
तत्र पूषाभवत्सचा ॥ ४ ॥ ६।५७।४

१४९ गौर्धयति मरुतां श्रवस्युर्माता मघोनाम् ।
युक्ता वह्नी रथानाम् ॥ ५ ॥ ८।९४।१

(ऋग्वेदे) (सामवेदे)

१५० उप नो हरिभिः सुतं याहि मदानां पते।
उप नो हरिभिः सुतम् ॥६॥ ८।९३।३१ १७९०

१५१ इष्टा होत्रा असृक्षतेन्द्रं वृधन्तो अध्वरे।
अच्छावभृथमोजसा ॥७॥ ८।९३।२२

१५२ अहमिद्धि पितुष्परि मेधामृतस्य जग्रह।
अहं सूर्य इवाजनि ॥८॥ ८।६।१० १५००

१५३ रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः।
क्षुमन्तो याभिर्मदेम ॥९॥ १।३०।१३ १०८३

१५४ सोमः पूषा च चेततुर्विश्वासां सुक्षितीनाम्।
देवत्रा रथ्योर्हिता ॥१०॥ (न ऋग्वेदीयः)

स्व० ८। उ० ५। धा० ४४। णी॥

इति षष्ठी दशतिः ॥६॥ चतुर्थः खण्डः ॥४॥

[७]

(१-१०) १, ४ श्रुतकक्षः सुकक्षो वा आङ्गिरसः; २ वसिष्ठो मैत्रावरुणिः; ३ मेधातिथिः काण्वः; प्रियमेधश्चांगिरसः; ५ इरिम्बिठिः काण्वः; ६, १० मधुच्छन्दा वैश्वामित्रः; ७ त्रिशोकः काण्वः; ८ कुसीदी काण्वः; ९ शुनःशेप आजीगर्तिः॥ इन्द्रः॥ गायत्री॥

१५५ पान्तमा वो अन्धस इन्द्रमभि प्र गायत।
विश्वासाहं शतक्रतुं मंहिष्ठं चर्षणीनाम् ॥१॥ ८।९२।१ ७१३

१५६ प्र व इन्द्राय मादनं हर्यश्वाय गायत।
सखायः सोमपान्ने ॥२॥ ७।३१।१ ७१६

१५७ वयमु त्वा तदिदर्था इन्द्र त्वायन्तः सखायः।
कण्वा उक्थेभिर्जरन्ते ॥३॥ ८।२।१६ ७१९

१५८ इन्द्राय मद्वने सुतं परि ष्टोभन्तु नो गिरः।
अर्कमर्चन्तु कारवः ॥४॥ ८।९२।१९ ७२२

१५९ अयं त इन्द्र सोमो निपूतो अधि बर्हिषि।
एहीमस्य द्रवा पिब ॥५॥ ८।१७।११ ७२५

| | | (ऋग्वेदे) | (सामवेदे) |
|---|---|---|---|
| १६० सुरूपकृत्नुमूतये सुदुघामिव गोदुहे । | | | |
| जुहूमसि द्यविद्यवि | ॥ ६ ॥ | १।४।१ | १०८७ |
| १६१ अभि त्वा वृषभा सुते सुतं सृजामि पीतये । | | | |
| तृम्पा व्यश्नुही मदम् | ॥ ७ ॥ | ८।४५।२२ | ७३१ |
| १६२ य इन्द्र चमसेष्वा सोमश्चमूषु ते सुतः । | | | |
| पिबेदस्य त्वमीशिषे | ॥ ८ ॥ | ८।८२।७ | |
| १६३ योगेयोगे तवस्तरं वाजेवाजे हवामहे । | | | |
| सखाय इन्द्रमूतये | ॥ ९ ॥ | १।३०।७ | ७४३ |
| १६४ आ त्वेता नि षीदतेन्द्रमभि प्र गायत । | | | |
| सखायः स्तोमवाहसः | ॥१०॥ | १।५।१ | ७४० |

स्व० ५ । उ० २ । धा० ३९ । फो ॥

इति सप्तमी दशतिः ॥७॥ पञ्चमः खण्डः ॥५॥

[ ८ ]

(१-१०) १ विश्वामित्रो गाथिनः; २ मधुच्छन्दा वैश्वामित्रः; ३ कुसीदी काण्वः; ४ प्रियमेध आंगिरसः; ५, ८ वामदेवो गौतमः; ६, ९ श्रुतकक्षः सुकक्षो वा आंगिरसः; ( ९ ऋ० सुकक्ष आंगिरसः ); ७ मेधातिथिः काण्वः; १० बिन्दुः पूतदक्षो वा आंगिरसः ॥ इन्द्रः ( ऋ० ७ सदसस्पतिः; १० मरुतः ) ॥ गायत्री ॥

| | | | |
|---|---|---|---|
| १६५ इदं ह्यन्वोजसा सुतं राधानां पते । | | | |
| पिबा त्वाऽस्य गिर्वणः | ॥ १ ॥ | ३।५१।१० | ७३७ |
| १६६ महाँ इन्द्रः पुरश्च नो महित्वमस्तु वज्रिणे । | | | |
| द्यौर्न प्रथिना शवः | ॥ २ ॥ | १।८।५ | |
| १६७ आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं सं गृभाय । | | | |
| महाहस्ती दक्षिणेन | ॥ ३ ॥ | ८।८१।१ | ७२८ |
| १६८ अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे । | | | |
| सूनुं सत्यस्य सत्पतिम् | ॥ ४ ॥ | ८।६९।४ | १४८९ |

❀

(ऋग्वेदे) (सामवेदे)

१६९ कया नश्चित्र आ भुवदूती सदावृधः सखा ।
कया शचिष्ठया वृता ॥ ५ ॥ ४।३१।१ ६८२

१७० त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम् ।
आ च्यावयस्यूतये ॥ ६ ॥ ८।९२।७

१७१ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।
सनिं मेधामयासिषम् ॥ ७ ॥ १।१८।६

१७२ ये ते पन्था अधो दिवो येभिर्व्यश्वमैरयः ।
उत श्रोषन्तु नो भुवः ॥ ८ ॥ (न ऋग्वेदीयः)

१७३ भद्रंभद्रं न आ भरेषमूर्जं शतक्रतो ।
यदिन्द्र मृडयासि नः ॥ ९ ॥ ८।९३।२८

१७४ अस्ति सोमो अयं सुतः पिबन्त्यस्य मरुतः ।
उत स्वराजो अश्विना ॥१०॥ ८।९४।४ १७८५

ख० १२ । उ० १ । धा० ४० ॥ चौ ॥

इति अष्टमी दशतिः ॥८॥ षष्ठः खण्डः ॥६॥

[९]

(१-१०) १ देवजामय इन्द्रमातरः; २ गोधा ऋषिका; ३ दध्यङ्ङाथर्वणः; ४ प्रस्कण्वः काण्वः; ५ गोतमो राहूगणः; ६ मधुच्छन्दा वैश्वामित्रः; ७ वामदेवो गौतमः; ८ वत्सः काण्वः; ९ शुनःशेप आजीगर्तिः; १० उलो वातायनः ॥ इन्द्रः ( ऋ० ४ अश्विनौ; १० वायुः ) ॥ गायत्री ॥

१७५ ईङ्खयन्तीरपस्युव इन्द्रं जातमुपासते ।
वन्वानासः सुवीर्यम् ॥ १ ॥ १०।१५३।१

१७६ नकि देवा इनीमसि न क्या योपयामसि ।
मन्त्रश्रुत्यं चरामसि ॥ २ ॥ १०।१३४।७

१७७ दोषो आगाद् बृहद्गाय द्युमद्गामन्नाथर्वण ।
स्तुहि देवं सवितारम् ॥ ३ ॥ (न ऋग्वेदीयः)

१७८ एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः ।
स्तुषे वामश्विना बृहत् ॥ ४ ॥ १।४६।१

१७९ इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः ।
जघान नवतीर्नव ॥ ५ ॥ १।८४।१३ ९१३

१८० इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः ।
महाँ अभिष्टिरोजसा ॥ ६ ॥ १।९।१

१८१ आ तू न इन्द्र वृत्रहन्नस्माकमर्धमा गहि ।
महान्महीभिरूतिभिः ॥ ७ ॥ ४।३२।१

१८२ ओजस्तदस्य तित्विष उभे यत्समवर्तयत् ।
इन्द्रश्चर्मेव रोदसी ॥ ८ ॥ ८।६।५

१८३ अयमु ते समतसि कपोत इव गर्भधिम् ।
वचस्तच्चिन्न ओहसे ॥ ९ ॥ १।३०।४ १५९९

१८४ वात आ वातु भेषजं शम्भु मयोभु नो हृदे ।
प्र न आयूँषि तारिषत् ॥१०॥ १०।१८६।१ १८४०

ख० १० । उ० २ । धा० ४५ । फु ॥

इति नवमी दशतिः ॥ ९ ॥ सप्तमः खण्डः ॥ ७ ॥

[ १० ]

(१-९) १ कण्वो घौरः; २, ३, ९ वत्सः ( ऋ० २, ९ वशोऽश्व्यः ) काण्वः; ४ श्रुतकक्षः सुकक्षो वा आङ्गिरसः; ५ मधुच्छन्दा वैश्वामित्रः; ६ वामदेवो गौतमः; ७ इरिम्बिठिः काण्वः; ८ सत्यधृति वारुणिः ॥ इन्द्रः ( ऋ० १ वरुणमित्रार्यमणः; ८ आदित्यः ) गायत्री ॥

१८५ यं रक्षन्ति प्रचेतसो वरुणो मित्रो अर्यमा ।
न किः स दभ्यते जनः ॥ १ ॥ १।४१।१

१८६ गव्यो षु णो यथा पुराश्वयोत रथया ।
वरिवस्या महोनाम् ॥ २ ॥ ८।४६।१०

१८७ इमास्त इन्द्र पृश्नयो घृतं दुहत आशिरम् ।
एनामृतस्य पिप्युषीः ॥ ३ ॥ ८।६।१९

१८८ अया धिया च गव्यया पुरुणामन्पुरुष्टुत ।
यत्सोमेसोम आभुवः ॥ ४ ॥ ८।९३।१७

१८९ पावका नः सरस्वती वाजेभिर्वाजिनीवती ।
यज्ञं वष्टु धियावसुः ॥ ५ ॥ १।३।१०

१९० क इमं नाहुषीष्वा इन्द्रं सोमस्य तर्पयात् ।
स नो वसून्या भरात् ॥ ६ ॥ (न ऋग्वेदीयः)

१९१ आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम् ।
एदं बर्हिः सदो मम ॥ ७ ॥ ८।१७।१ ६६६

१९२ महि त्रीणामवरस्तु द्युक्षं मित्रस्यार्यम्णः ।
दुराधर्षं वरुणस्य ॥ ८ ॥ १०।१८५।१

१९३ त्वावतः पुरूवसो वयमिन्द्र प्रणेतः ।
स्मसि स्थातर्हरीणाम् ॥ ९ ॥ ८।४६।१

स्व० ६ । उ० ४ । धा० ३५ । घु ॥

इति दशमी दशतिः ॥ १० ॥ अष्टमः खण्डः ॥ ८ ॥

इति द्वितीयप्रपाठके द्वितीयोऽर्धः, द्वितीयः प्रपाठकश्च समाप्तः ॥

अथ तृतीयप्रपाठके प्रथमोऽर्धः ।

[ १ ]

(१-१० ) १ प्रगाथः काण्वः; २ विश्वामित्रो गाथिनः; ३, १० वामदेवो गौतमः; ४, ६ श्रुतकक्षः आङ्गिरसः ( ऋ० ४ सुकक्षोः वा; ६ सुकक्ष आंगिरसः ); ५ मधुच्छन्दा वैश्वामित्रः; ७ गृत्समदः शौनकः; ८, ९ भरद्वाजः (ऋ०- ८ शंयुः) बार्हस्पत्यः ॥ इन्द्रः ( ९ ऋ० इन्द्रापूषणौ )॥ गायत्री ॥

१९४ उत्त्वा मन्दन्तु सोमाः कृणुष्व राधो अद्रिवः ।
अव ब्रह्मद्विषो जहि ॥ १ ॥ ८।६४।१ १२५४

१९५ गिर्वणः पाहि नः सुतं मधोर्धाराभिरज्यसे ।
इन्द्र त्वादातमिद्यशः ॥ २ ॥ ३।४०।६

१९६ सदा व इन्द्रश्चर्कृषदा उपो नु स सपर्यन् ।
न देवो वृतः शूर इन्द्रः ॥ ३ ॥ (न ऋग्वेदीयः)

(ऋग्वेदे) (सामवेदे)

१९७ आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः।
न त्वामिन्द्राति रिच्यते ॥ ४ ॥ ८।९२।२२ १६६०

१९८ इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः।
इन्द्रं वाणीरनूषत ॥ ५ ॥ १।७।१ ७९६

१९९ इन्द्र इषे ददातु न ऋभुक्षणमृभुं रयिम्।
वाजी ददातु वाजिनम् ॥ ६ ॥ ८।९३।३४

२०० इन्द्रो अङ्ग महद्भयमभी षदप चुच्यवत्।
स हि स्थिरो विचर्षणिः ॥ ७ ॥ २।४१।१०

२०१ इमा उ त्वा सुतेसुते नक्षन्ते गिर्वणो गिरः।
गावो वत्सं न धेनवः ॥ ८ ॥ ६।४५।२८

२०२ इन्द्रा नु पूषणा वयं सख्याय स्वस्तये।
हुवेम वाजसातये ॥ ९ ॥ ६।५७।१

२०३ न कि इन्द्र त्वदुत्तरं न ज्यायो अस्ति वृत्रहन्।
न क्येवं यथा त्वम् ॥१०॥ ४।३०।१

स्व० ८। उ० ७। धा० ३५। ठु ॥

इति प्रथमा दशतिः ॥१॥ नवमः खण्डः ॥२॥

[२]

( १-१० ) १, ४ त्रिशोकः काण्वः; २ मधुच्छन्दा वैश्वामित्रः; ३ वत्सः काण्वः; ( ऋ० वशोऽश्व्यः ); ५ सुकक्ष आङ्गिरसः; ६, ९ वामदेवो गौतमः; ७ विश्वामित्रो गाथिनः। ८ गोषूक्त्यश्वसूक्तिनौ काण्वायनौ; १० श्रुतकक्षः सुकक्षो वा आङ्गिरसः ॥ इन्द्रः ॥ गायत्री ॥

२०४ तरणिं वो जनानां त्रदं वाजस्य गोमतः।
समानमु प्र शंसिषम् ॥ १ ॥ ८।४५।२८

२०५ असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत।
सजोषा वृषभं पतिम् ॥ २ ॥ १।९।४

२०६ सुनीथो घा स मर्त्यो यं मरुतो यमर्यमा।
मित्रास्पान्त्यद्रुहः ॥ ३ ॥ ८।४६।४

(ऋग्वेदे) (सामवेदे)

२०७ यद्वीडाविन्द्र यत्स्थिरे यत्पर्शाने पराभृतम्।
वसु स्पार्हं तदा भर ॥ ४ ॥ ८।४५।४१ १०७२

२०८ श्रुतं वो वृत्रहन्तमं प्र शर्धं चर्षणीनाम्।
आशिषे राधसे महे ॥ ५ ॥ ८।९३।२६

२०९ अरं त इन्द्र श्रवसे गमेम शूर त्वावतः।
अरं शक्र परेमणि ॥ ६ ॥ (न ऋग्वेदीयः)

२१० धानावन्तं करम्भिणमपूपवन्तमुक्थिनम्।
इन्द्र प्रातर्जुषस्व नः ॥ ७ ॥ ३।५२।१

२११ अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः।
विश्वा यदजय स्पृधः ॥ ८ ॥ ८।१४।१३

२१२ इमे त इन्द्र सोमाः सुतासो ये च सोत्वाः।
तेषां मत्स्व प्रभूवसो ॥ ९ ॥ (न ऋग्वेदीयः)

२१३ तुभ्यं सुतासः सोमाः स्तीर्णं बर्हिर्विभावसो।
स्तोतृभ्य इन्द्र मृडय ॥ १० ॥ ८।९३।२५

स्व० ८। उ० २। धा० ३३। ठि ॥

इति द्वितीया दशतिः ॥२॥ दशमः खण्डः ॥१०॥

[ ३ ]

( १-९ ) १ शुनःशेप आजीगर्तिः; २ श्रुतकक्ष आंगिरसः ( ऋ० सुकक्षो आंगिरसो वा;) ३ त्रिशोकः काण्वः; ४ मेधातिथिः काण्वः; ५ गोतमो राहूगणः; ६ ब्रह्मातिथिः काण्वः; ७ विश्वामित्रो गाथिनो जमदग्निर्वा; ८ प्रस्कण्वः काण्वः ( ऋ० कण्वो घौरः ); ९ मेधातिथिः काण्वः ॥ इन्द्रः (ऋ० ५ विश्वेदेवाः); ६ अश्विनौ; मित्रावरुणौ; ८ मरुतः; ९ विष्णुः) ॥ गायत्री ॥

२१४ आ व इन्द्रं क्रिविं यथा वाजयन्तः शतक्रतुम्।
मंहिष्ठं सिञ्च इन्दुभिः ॥ १ ॥ १।३०।१

२१५ अतश्चिदिन्द्र न उपा याहि शतवाजया।
इषा सहस्रवाजया ॥ २ ॥ ८।९२।१०

२१६ आ बुन्दं वृत्रहा ददे जातः पृच्छाद्वि मातरम्
क उग्राः के ह शृण्विरे ॥ ३ ॥ ८।४५।४

(ऋग्वेदे) (सामवेदे)

२१७ बृबदुक्थं हवामहे सृप्रकरस्नमूतये ।
साधः कृण्वन्तमवसे ॥४॥ ८।३२।१०

२१८ ऋजुनीती नो वरुणो मित्रो नयति विद्वान् ।
अर्यमा देवैः सजोषाः ॥५॥ १।९०।१

२१९ दूरादिहेव यत्सतोऽरुणप्सुरशिश्वितत् ।
वि भानुं विश्वथातनत् ॥६॥ ८।५।१

२२० आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् ।
मध्वा रजांसि सुक्रतू ॥७॥ ३।६२।१६ ६६३

२२१ उदु त्ये सूनवो गिरः काष्ठा यज्ञेष्वत्नत ।
वाश्रा अभिज्ञु यातवे ॥८॥ १।३७।१०

२२२ इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् ।
समूढमस्य पांसुले ॥९॥ १।२२।१७

स्व० ६ । उ० १ । धा० ३९ । को ॥

इति तृतीया दशतिः ॥३॥ एकादशः खण्डः ॥११॥

[४]

(१-१०) १, ७, ८ मेधातिथिः काण्वः; २ वामदेवो गौतमः; ३, ५ मेधातिथिः काण्वः, प्रियमेधश्चाङ्गिरसः; ४ विश्वामित्रो गाथिनः; ६ दुर्मित्रः (सुमित्रो वा) कौत्सः; ९ विश्वामित्रो गाथिनोऽभीपाद् उदलो वा; १० श्रुतकक्षः ( ऋ० सुकक्षो वा ) आंगिरसः ॥ इन्द्रः ॥ गायत्री ॥

२२३ अतीहि मन्युषाविणं सुषुवांसमुपेरय ।
अस्य रातौ सुतं पिब ॥१॥ ८।३२।२१

२२४ कदु प्रचेतसे महे वचो देवाय शस्यते ।
तदिध्यस्य वर्धनम् ॥२॥ ( न ऋग्वेदीयः )

(ऋग्वेदे) (सामवेदे)

२२५ उक्थं च न शस्यमानं नागो रयिरा चिकेत ।
न गायत्रं गीयमानम् ॥ ३ ॥ ८।२।१४ १८०५

२२६ इन्द्र उक्थेभिर्मन्दिष्ठो वाजानां च वाजपतिः ।
हरिवांत्सुतानां सखा ॥ ४ ॥ ( न ऋग्वेदीयः )

२२७ आ याह्युप नः सुतं वाजेभिर्मा हृणीयथाः ।
महाँ इव युवजानिः ॥ ५ ॥ ८।२।१९

२२८ कदा वसो स्तोत्रं हर्यत आ अव श्मशा रुधद्वाः ।
दीर्घं सुतं वाताप्याय ॥ ६ ॥ १०।१०५।१

२२९ ब्राह्मणादिन्द्र राधसः पिबा सोममृतूँरनु ।
तवेदं सख्यमस्तृतम् ॥ ७ ॥ १।१५।५

२३० वयं घा ते अपि स्मसि स्तोतार इन्द्र गिर्वणः ।
त्वं नो जिन्व सोमपाः ॥ ८ ॥ ८।३२।७

२३१ एन्द्र पृक्षु कासु चिन्नृम्णं तनूषु धेहि नः ।
सत्राजिदुग्र पौंस्यम् ॥ ९ ॥ ( न ऋग्वेदीयः )

२३२ एवा ह्यसि वीरयुरेवा शूर उत स्थिरः ।
एवा ते राध्यं मनः ॥ १० ॥ ८।९२।२८ ८२४

स्व० १२। उ० ना। धा० ३०। यौ ॥

इति चतुर्थी दशतिः ॥४॥ द्वादशः खण्डः ॥१२॥

इति द्वितीयोऽध्यायः ॥२॥

इत्येकसामि समाप्तम् ॥

## अथ तृतीयोऽध्यायः।

[५]

(१-१०) १, ६, ९ वसिष्ठो मैत्रावरुणिः; २ भरद्वाजः (ऋ० शंयुः) बार्हस्पत्यः; ३ प्रस्कण्वः काण्वः;४ नोधा गौतमः; ५ कलिः प्रागाथः; । ७ मेधातिथिः काण्वः; ८ भर्गः प्रागाथः;१० प्रगाथो घौरः काण्वः ॥ इन्द्रः, ९ मरुतः ॥ बृहती ॥

(ऋग्वेदे) (सामवेदे)

२३३ अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ १ ॥ ७।३२।२२ ६८०

२३४ त्वामिद्धि हवामहे सातौ वाजस्य कारवः।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥ २ ॥ ६।४६।१ ८०९

२३५ अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ॥ ३ ॥ ८।४९।१ ८११

२३६ तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः।
अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥ ४ ॥ ८।८८।१ ६८५

२३७ तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऊतये।
बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम् ॥ ५ ॥ ८।६६।१ ६८७

२३८ तरणिरित्सिषासति वाजं पुरन्ध्या युजा।
आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्रुवम् ॥ ६ ॥ ७।३२।२० ८६७

२३९ पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः।
आपिर्नो बोधि सधमाद्ये वृधे३ऽस्मां अवन्तु ते धियः ॥ ७ ॥ ८।३।१ १४२१

२४० त्वं ह्येहि चेरवे विदा भगं वसुत्तये।
उद्वावृषस्व मघवन् गविष्टय उदिन्द्राश्वमिष्टये ॥ ८ ॥ ८।६१।७ १५८१

२४१ न हि वश्चरमं च न वसिष्ठः परिमंसते।
अस्माकमद्य मरुतः सुते सचा विश्वे पिबन्तु कामिनः ॥ ९ ॥ ७।५९।३

२४२ मा चिदन्यद्वि शंसत सखायो मा रिषण्यत।
इन्द्रमित्स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत ॥१०॥ ८।१।१ १३६०

स्व० १२ । उ० ५ । धा० ७३ । जि ॥

इति पञ्चमी दशतिः ॥५॥ प्रथमः खण्डः ॥१॥ इति तृतीय प्रपाठके प्रथमोऽर्धः ॥१॥

[ ६ ]

( १-१० ) १ पुरुहन्मा आंगिरसः; २, ३ मेधातिथि-मेध्यातिथी काण्वौ; ४ विश्वामित्रो गाथिनः; ५ गोतमो (गौतमो वा) राहूगणः; ६ नृमेधपुरुमेधावांगिरसौ; ७,८,९ मेधातिथिर्मेध्यातिथिर्वा (ऋ० मेध्यातिथिः) काण्वः; १० देवातिथिः काण्वः ॥ इन्द्रः ॥ बृहती ॥

(ऋग्वेदे) (सामवेदे)

२४३ नकिष्टं कर्मणा नशद्यश्चकार सदावृधम् ।
इन्द्रं न यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्णुमोजसा ॥ १ ॥ ८।७०।३ ११५५

२४४ य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः ।
सन्धाता सन्धिं मघवा पुरूवसुर्निष्कर्ता विह्रुतं पुनः ॥ २ ॥ ८।१।१२

२४५ आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये ।
ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये ॥ ३ ॥ ८।१।२४ १३४१

२४६ आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ।
मा त्वा के चिन्नि येमुरिन्न पाशिनोऽति धन्वेव ताँ इहि ॥४॥ ३।४५।१ १७१८

२४७ त्वमङ्ग प्र शंसिषो देवः शविष्ठ मर्त्यम् ।
न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥ ५ ॥ १।८४।१९ १७२३

२४८ त्वमिन्द्र यशा अस्यृजीषी शवसस्पतिः ।
त्वं वृत्राणि हंस्यप्रतीन्येक इत्पुर्वनुत्तश्चर्षणीधृतिः ॥ ६ ॥ ८।९०।५

२४९ इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे ।
इन्द्रं समीके वनिनो हवामह इन्द्रं धनस्य सातये ॥ ७ ॥ ८।३।५ १५८७

२५० इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम ।
पावकवर्णाः शुचयो विपश्चितोऽभिस्तोमैरनूषत ॥ ८ ॥ ८।३।३ १६०७

२५१ उदु त्ये मधुमत्तमा गिर स्तोमास ईरते ।
सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव ॥ ९ ॥ ८।३।१५

२५२ यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम् ।
आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब॥१०॥ ८।४।३ १७२१

स्व० ११ । उ० ७ । धा० ७२ । खा ॥

इति षष्ठी दशतिः ॥६॥ द्वितीयः खण्डः ॥२॥

[७]

( १-१० ) १ भर्गः प्रागाथः; २,८ रेभः काश्यपः; ३ जमदग्निर्भार्गवः; ४, ९ मेधातिथिः काण्वः; ( ऋ० मेध्यातिथिः काण्वः ); ५, ६ नृमेधपुरुमेधावांगिरसौ; ७ वसिष्ठो मैत्रावरुणिः; १० भरद्वाजः (ऋ० शंयुः) बार्हस्पत्यः ॥ इन्द्रः, ३ मित्रावरुणादित्याः ॥ बृहती ॥

२५३ शग्ध्यू३षु शचीपत इन्द्र विश्वाभिरूतिभिः । (ऋग्वेदे) (सामवेदे)
भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥ १ ॥ ८।६१।५ १५७९
२५४ या इन्द्र भुज आभरः स्वर्वाँ असुरेभ्यः ।
स्तोतारमिन्मघवन्नस्य वर्धय ये च त्वे वृक्तबर्हिषः ॥ २ ॥ ८।९७।१
२५५ प्र मित्राय प्रार्यम्णे सचथ्यमृतावसो ।
वरूथ्ये३वरुणे छन्द्यं वचः स्तोत्रं राजसु गायत ॥ ३ ॥ ८।१०१।५
२५६ अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः ।
समीचीनास ऋभवः समस्वरन्रुद्रा गृणन्त पूर्व्यम् ॥ ४ ॥ ८।३।७ १५७३
२५७ प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत ।
वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ॥ ५ ॥ ८।८९।३
२५८ बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम् ।
येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवि ॥ ६ ॥ ८।८९।१
२५९ इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥७॥ ७।३२।२६
२६० मा न इन्द्र परा वृणग्भवा नः सधमाद्ये ।
त्वं न ऊती त्वमिन्न आप्यं मा न इन्द्र परावृणक् ॥ ८ ॥ ८।९७।७
२६१ वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः ।
पवित्रस्य प्रस्रवणेषु वृत्रहन्परि स्तोतार आसते ॥ ९ ॥ ८।३३।१ ८६४
२६२ यदिन्द्र नाहुषीष्वा ओजो नृम्णं च कृष्टिषु ।
यद्वा पञ्चक्षितीनां द्युम्नमा भर सत्रा विश्वानि पौंस्या ॥१०॥ ६।४६।७

॥ स्व० १० । उ० १ । धा० ६२ । पा ॥

इति सप्तमी दशतिः ॥ ७ ॥ तृतीयः खण्डः ॥ १०॥

[ ६ ]

( १-१० ) १ पुरुहन्मा आंगिरसः; २, ३ मेधातिथि-मेध्यातिथी काण्वौ; ४ विश्वामित्रो गाथिनः; ५ गोतमो (गौतमो वा) राहूगणः; ६ नृमेधपुरुमेधावांगिरसौ; ७,८,९ मेधातिथिर्मेध्यातिथिर्वा (ऋ० मेध्यातिथिः) काण्वः; १० देवातिथिः काण्वः ॥ इन्द्रः ॥ बृहती ॥

(ऋग्वेदे) (सामवेदे)

२४३ नकिष्टं कर्मणा नशद्यश्चकार सदावृधम् ।
इन्द्रं न यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्णुमोजसा ॥ १ ॥ ८।७०।३ ११५५

२४४ य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः ।
सन्धाता सन्धिं मघवा पुरूवसुर्निष्कर्ता विह्रुतं पुनः ॥ २ ॥ ८।१।१२

२४५ आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये ।
ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये ॥ ३ ॥ ८।१।२४ १३४१

२४६ आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ।
मा त्वा के चिन्नि येमुरिन्न पाशिनोऽति धन्वेव ताँ इहि ॥४॥ ३।४५।१ १७१८

२४७ त्वमङ्ग प्र शंसिषो देवः शविष्ठ मर्त्यम् ।
न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥ ५ ॥ १।८४।१९ १७२३

२४८ त्वमिन्द्र यशा अस्यृजीषी शवसस्पतिः ।
त्वं वृत्राणि हंस्यप्रतीन्येक इत्पुर्वनुत्तश्चर्षणीधृतिः ॥ ६ ॥ ८।९०।५

२४९ इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे ।
इन्द्रं समीके वनिनो हवामह इन्द्रं धनस्य सातये ॥ ७ ॥ ८।३।५ १५८७

२५० इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम ।
पावकवर्णाः शुचयो विपश्चितोऽभिस्तोमैरनूषत ॥ ८ ॥ ८।३।३ १६०७

२५१ उदु त्ये मधुमत्तमा गिर स्तोमास ईरते ।
सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव ॥ ९ ॥ ८।३।१५

२५२ यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम् ।
आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब॥१०॥ ८।४।३ १७२१

स्व० ११ । उ० ७ । धा० ७२ । खा ॥

इति षष्ठी दशतिः ॥६॥ द्वितीयः खण्डः ॥२॥

[७]

( १-१० ) १ भर्गः प्रागाथः; २,८ रेभः काश्यपः; ३ जमदग्निर्भार्गवः; ४, ९ मेधातिथिः काण्वः;
( ऋ० मेध्यातिथिः काण्वः ); ५, ६ नृमेधपुरुमेधावांगिरसौ; ७ वसिष्ठो मैत्रावरुणिः;
१० भरद्वाजः (ऋ० शंयुः) बार्हस्पत्यः ॥ इन्द्रः, ३ मित्रावरुणादित्याः ॥ बृहती ॥

२५३ शग्ध्यू३षु शचीपत इन्द्र विश्वाभिरूतिभिः । (ऋग्वेदे) (सामवेदे)
भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥ १ ॥ ८।६१।५ १५७९
२५४ या इन्द्र भुज आभरः स्वर्वाँ असुरेभ्यः ।
स्तोतारमिन्मघवन्नस्य वर्धय ये च त्वे वृक्तबर्हिषः ॥ २ ॥ ८।९७।१
२५५ प्र मित्राय प्रार्यम्णे सचथ्यमृतावसो ।
वरूथ्ये३वरुणे छन्द्यं वचः स्तोत्रं राजसु गायत ॥ ३ ॥ ८।१०१।५
२५६ अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः ।
समीचीनास ऋभवः समस्वरन्रुद्रा गृणन्त पूर्व्यम् ॥ ४ ॥ ८।३।७ १५७३
२५७ प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत ।
वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ॥ ५ ॥ ८।८९।३
२५८ बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम् ।
येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवि ॥ ६ ॥ ८।८९।१
२५९ इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥७॥ ७।३२।२६
२६० मा न इन्द्र परा वृणग्भवा नः सधमाद्ये ।
त्वं न ऊती त्वमिन्न आप्यं मा न इन्द्र परा वृणक् ॥ ८ ॥ ८।९७।७
२६१ वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः ।
पवित्रस्य प्रस्रवणेषु वृत्रहन्परि स्तोतार आसते ॥ ९ ॥ ८।३३।१ ८६४
२६२ यदिन्द्र नाहुषीष्वा ओजो नृम्णं च कृष्टिषु ।
यद्वा पञ्चक्षितीनां द्युम्नमा भर सत्रा विश्वानि पौंस्या ॥१०॥ ६।४६।७

॥ स्व० १० । उ० १ । धा० ६२ । पा ॥

इति सप्तमी दशतिः ॥ ७ ॥ तृतीयः खण्डः ॥ १०॥

[ ८ ]

(१-१०) १ मेधातिथिः (ऋ० मेध्यातिथिः) काण्वः; २ रेभः काश्यपः; ३ वत्सः ( ऋ० वशोऽश्व्यः ); ४ भरद्वाजः ( शंयुः)बार्हस्पत्यः; ५ नृमेध आंगिरसः; ६ पुरुहन्मा आंगिरसः; ७ नृमेध-पुरुमेधावांगिरसौ; ८ वसिष्ठो मैत्रावरुणिः; ९ मेधातिथि-मेध्यातिथी काण्वौ; १० कलिः प्रागाथः ॥ इन्द्रः ॥ बृहती ॥

(ऋग्वेदे) (सामवेदे)

२६३ सत्यमित्था वृषेदसि वृषजूतिर्नोऽविता ।
वृषा ह्युग्र शृण्विषे परावति वृषो अर्वावति श्रुतः ॥ १ ॥ ८।३३।१०

२६४ यच्छक्रासि परावति यदर्वावति वृत्रहन् ।
अतस्त्वा गीर्भिर्द्युगदिन्द्र केशिभिः सुतावाँ आ विवासति ॥२॥ ८।९७।४

२६५ अभि वो वीरमन्धसो मदेषु गाय गिरा महा विचेतसम् ।
इन्द्रं नाम श्रुत्यं शाकिनं वचो यथा ॥ ३ ॥ ८।४६।१४

२६६ इन्द्र त्रिधातु शरणं त्रिवरूथं स्वस्तये ।
छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः ॥ ४ ॥ ६।४६।९

२६७ श्रायन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत ।
वसूनि जातो जनिमान्योजसा प्रति भागं न दीधिम ॥ ५ ॥ ८।९९।३ १३१९

२६८ न सीमदेव आप तदिषं दीर्घायो मर्त्यः ।
एतग्वा चिद्य एतशो युयोजत इन्द्रो हरी युयोजते ॥ ६ ॥ ८।७०।७

२६९ आ नो विश्वासु हव्यमिन्द्रं समत्सु भूषत ।
उप ब्रह्माणि सवनानि वृत्रहन्परमज्या ऋचीषम ॥ ७ ॥ ८।९०।१ १४९२

२७० तवेदिन्द्रावमं वसु त्वं पुष्यसि मध्यमम् ।
सत्रा विश्वस्य परमस्य राजसि न किष्ट्वा गोषु वृण्वते ॥ ८ ॥ ७।३२।१६

२७१ क्वेयथ क्वेदसि पुरुत्रा चिद्धि ते मनः ।
अलर्षि युध्म खजकृत्पुरंदर प्र गायत्रा अगासिषुः ॥ ९ ॥ ८।१।७

२७२ वयमेनमिदा ह्योऽपीपेमेह वज्रिणम् । ( ऋग्वेदे ) ( सामवेदे )
तस्मा उ अद्य सवने सुतं भरा नूनं भूषत श्रुते ॥१०॥ ८।६६।७ १६९१

स्व० १४। उ० १। धा० ७४। ती ॥

इति अष्टमी दशतिः ॥ ८ ॥ चतुर्थः खण्डः ॥ ४ ॥

[ ९ ]

( १-१० ) १, ६ पुरुहन्मा आंगिरसः; २ भर्गः प्रागाथः; ३ इरिम्बिठिः काण्वः; ४ जमदग्नि भार्गवः; ५, ७ देवातिथिः काण्वः; ८ वसिष्ठो मैत्रावरुणिः; ९ भरद्वाजो बार्हस्पत्यः; १० मेध्यः काण्वः ॥ इन्द्रः ( ऋ० ३ वास्तोष्पतिर्वा; ४ सूर्यः; ९ इन्द्राग्नी ) ॥
बृहती ॥

२७२ यो राजा चर्षणीनां याता रथेभिरध्रिगुः ।
विश्वासां तरुता पृतनानां ज्येष्ठं यो वृत्रहा गृणे ॥ १ ॥ ८।७०।१ ९३३
२७४ यत इन्द्र भयामहे ततो नो अभयं कृधि ।
मघवञ्छग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि ॥ २ ॥ ८।६१।१३ १३२१
२७५ वास्तोष्पते ध्रुवा स्थूणांसत्रं सोम्यानाम् ।
द्रप्सः पुरां भेत्ता शश्वतीनामिन्द्रो मुनीनां सखा ॥ ३ ॥ ८।१७।१४
२७६ बण्महाँ असि सूर्य बडादित्य महाँ असि ।
महस्ते सतो महिमा पनिष्टम मह्ना देव महाँ असि ॥ ४ ॥ ८।१०१।११ १७८८
२७७ अश्वी रथी सुरूप इद्गोमाँ यदिन्द्र ते सखा ।
श्वात्रभाजा वयसा सचते सदा चन्द्रैर्याति सभामुप ॥ ५ ॥ ८।४।९
२७८ यद्द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।
न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी ॥ ६ ॥ ८।७०।५ ८६२
२७९ यदिन्द्र प्रागपागुदग्न्यग्वा हूयसे नृभिः ।
सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे ॥ ७ ॥ ८।४।१ १२३१
२८० कस्तमिन्द्र त्वा वसवा मर्त्यो दधर्षति ।
श्रद्धा हि ते मघवन्पार्ये दिवि वाजी वाजं सिषासति ॥ ८ ॥ ७।३२।१४ १६८२

(ऋग्वेदे) (सामवेदे)

२८१ इन्द्राग्नी अपादियं पूर्वागात्पद्वतीभ्यः ।
हित्वा शिरो जिह्वया रारपच्चरत्त्रिंशत्पदा न्यक्रमीत् ॥ ९ ॥ ६।५९।६

२८२ इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः ।
आ शंतम शंतमाभिरभिष्टिभिरा स्वापे स्वापिभिः ॥१०॥ ८।५३।५

स्व० १६ । उ० ५ । धा० ७२ । ञ ॥

इति नवमी दशतिः ॥९॥ इति पञ्चमः खण्डः ॥५॥

[ १० ]

( १-१० ) १ नृमेध आंगिरसः; २,३ वसिष्ठो मैत्रावरुणिः; ४ भरद्वाजः (ऋ० शंयुः) बार्हस्पत्यः; ५ परुच्छेपो दैवोदासिः; ६ वामदेवो गौतमः; ७ मेध्यातिथिः काण्वः; ८ भर्गः प्रागाथः; ९, १० मेधातिथि-मेध्यातिथी काण्वौ ॥ इन्द्रः ( ५ ऋ० आश्विनौ ) ॥ बृहती ॥

२८३ इत ऊती वो अजरं प्रहेतारमप्रहितम् ।
आशुं जेतारं हेतारं रथीतममतूर्तं तुग्रियावृधम् ॥ १ ॥ ८।९९।७

२८४ मो षु त्वा वाघतश्च नारे अस्मन्नि रीरमन् ।
आरात्ताद्वा सधमादं न आ गहीह वा सन्नुप श्रुधि ॥ २ ॥ ७।३२।१ १६७५

२८५ सुनोता सोमपाव्ने सोममिन्द्राय वज्रिणे ।
पचता पक्तीरवसे कृणुध्वमित्पृणन्नित्पृणते मयः ॥ ३ ॥ ७।३२।८

२८६ यः सत्राहा विचर्षणिरिन्द्रं तं हूमहे वयम् ।
सहस्रमन्यो तुविनृम्ण सत्पते भवा समत्सु नो वृधे ॥ ४ ॥ ६।४६।३

२८७ शचीभिर्नः शचीवसू दिवा नक्तं दिशस्यतम् ।
मा वां रातिरुपदसत्कदाचनास्मद्रातिः कदाचन ॥ ५ ॥ ५।१३९।५

२८८ यदा कदा च मीढुषे स्तोता जरेत मर्त्यः ।
आदिद्वन्देत वरुणं विपा गिरा धर्त्तारं विव्रतानाम् ॥ ६ ॥ (न ऋग्वेदीयः)

२८९ पाहि गा अन्धसो मद इन्द्राय मेध्यातिथे ।
यः संमिश्लो हर्योर्यो हिरण्यय इन्द्रो वज्री हिरण्ययः ॥ ७ ॥ ८।३३।४

| | | |
|---|---|---|
| | (ऋग्वेदे) | (सामवेदे) |
| २९० उभयं शृणवच्च न इन्द्रो अर्वागिदं वचः । सत्राच्या मघवान्त्सोमपीतये धिया शविष्ठ आ गमत् ॥८॥ | ८।६१।१ | १२३३ |
| २९१ महे च न त्वाद्रिवः परा शुल्काय दीयसे । न सहस्राय नायुताय वज्रिवो न शताय शतामघ ॥ ९ ॥ | ८।१।५ | |
| २९२ वस्यां इन्द्रासि मे पितुरुत भ्रातुरभुञ्जतः । माता च मे छदयथः समा वसो वसुत्वनाय राधसे ॥१०॥ | ८।१।६ | |

स्व० १५ । उ० ४ । धा० ७६ । भू ॥

इति दशमी दशतिः ॥ १० ॥ षष्ठः खण्डः ॥ ६ ॥

इति तृतीयप्रपाठके द्वितीयोऽर्धः, तृतीयः प्रपाठकश्च समाप्तः ॥

अथ चतुर्थप्रपाठके प्रथमोऽर्धः ।

[ १ ]

(१-१०) १ वसिष्ठो मैत्रावरुणिः; २, ६, ७ वामदेवो गौतमः; ३ मेधातिथि-मेध्यातिथी काण्वौ, विश्वामित्र इत्येके; ४ नोधा गौतमः; ५ मेधातिथिः (ऋ० मेध्यातिथिः) काण्वः; ८ श्रुष्टिगुः काण्वः; ९ मेध्यातिथिः (मेधातिथिर्वा) काण्वः; १० नृमेध आंगिरसः ॥ इन्द्रः; ७ बहुः ॥ बृहती ॥

| | | |
|---|---|---|
| २९३ इम इन्द्राय सुन्विरे सोमासो दध्याशिरः । ताँ आ मदाय वज्रहस्त पीतये हरिभ्यां याह्योक आ ॥ १ ॥ | ७।३२।४ | |
| २९४ इम इन्द्र मदाय ते सोमाश्चिकित्र उक्थिनः । मधोः पपान उप नो गिरः शृणु रास्व स्तोत्राय गिर्वणः ॥ २ ॥ | (न ऋग्वेदीयः) | |
| २९५ आ त्वा३द्य सबर्दुघां हुवे गायत्रवेपसम् । इन्द्रं धेनुं सुदुघामन्यामिषमुरुधारामरङ्कृतम् ॥ ३ ॥ | ८।१।१० | |
| २९६ न त्वा बृहन्तो अद्रयो वरन्त इन्द्र वीडवः । यच्छिक्षासि स्तुवते मावते वसु न किष्टदा मिनाति ते ॥ ४ ॥ | ८।८८।३ | |
| २९७ क ईं वेद सुते सचा पिबन्तं कद्वयो दधे । अयं यः पुरो विभिनत्योजसा मन्दानः शिप्र्यन्धसः ॥ ५ ॥ | ८।३३।७ | १६९६ |
| २९८ यदिन्द्र शासो अव्रतं च्यावया सदसस्परि । अस्माकमंशुं मघवन्पुरुस्पृहं वसव्ये अधि बर्हय ॥ ६ ॥ | (न ऋग्वेदीयः) | |

२९९ त्वष्टा नो दैव्यं वचः पर्जन्यो ब्रह्मणस्पतिः । (ऋग्वेदे) (सामवेदे)
पुत्रैर्भ्रातृभिरदितिर्नु पातु नो दुष्टरं त्रामणं वचः ॥ ७ ॥ (न ऋग्वेदीयः)

३०० कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते ॥ ८ ॥ ८।५१।७

३०१ युङ्क्ष्वा हि वृत्रहन्तम हरी इन्द्र परावतः ।
अर्वाचीनो मघवन्त्सोमपीतय उग्र ऋष्वेभिरा गहि ॥ ९ ॥ ८।३।१७

३०२ त्वामिदा ह्यो नरोऽपीप्यन्वज्रिन्भूर्णयः ।
स इन्द्र स्तोमवाहस इह श्रुध्युप स्वसरमा गहि ॥१०॥ ८।९९।१ ८१३

स्व० १३ । उ० २ । धा० ८२ । ठि ॥

इति प्रथमा दशतिः ॥१॥ सप्तमः खण्डः ॥७॥

[ २ ]

(१-१०) १,२,७,८ वसिष्ठो मैत्रावरुणिः; ३ अश्विनौ वैवस्वतौ; ४ प्रस्कण्वः काण्वः; ५ मेधातिथि-मेध्यातिथी काण्वौ; ६ देवातिथिः काण्वः; ९ नृमेध आंगिरसः; १० नोधाः गौतमः ॥ इन्द्रः; १ उषा; २, ३ ( ऋ० ४ ) अश्विनौ ॥ बृहती ॥

३०३ प्रत्यु अदर्श्यायत्यू३च्छन्ती दुहिता दिवः ।
अपो मही वृणुते चक्षुषा तमो ज्योतिष्कृणोति सूनरी ॥१ ॥ ७।८१।१ ७५१

३०४ इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना ।
अयं वामह्वेऽवसे शचीवसू विशंविशं हि गच्छथः ॥ २ ॥ ७।७४।१ ७५३

३०५ कुष्ठः को वामश्विना तपानो देवा मर्त्यः ।
घ्नता वामश्मया क्षपमाणोंऽशुनेत्थमु आद्वन्यथा ॥ ३ ॥ (न ऋग्वेदीयः)

३०६ अयं वां मधुमत्तमः सुतः सोमो दिविष्टिषु ।
तमश्विना पिबतं तिरोअह्न्यं धत्तं रत्नानि दाशुषे ॥ ४ ॥ १।४७।१

३०७ आ त्वा सोमस्य गल्दया सदा याचन्नहं ज्या ।
भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत् ॥ ५ ॥ ८।१।२०

(ऋग्वेदे) (सामवेदे)

३०८ अध्वर्यो द्रावया त्वं सोममिन्द्रः पिपासति ।
उपो नूनं युयुजे वृषणा हरी आ च जगाम वृत्रहा ॥ ६ ॥ ८।४।११
३०९ अभी षतस्तदा भरेन्द्र ज्यायः कनीयसः ।
पुरूवसुर्हि मघवन्बभूविथ भरेभरे च हव्यः ॥ ७ ॥ ७।३२।२४
३१० यदिन्द्र यावतस्त्वमेतावदहमीशीय ।
स्तोतारमिद्दधिषे रदावसो न पापत्वाय रंसिषम् ॥ ८ ॥ ७।३२।१८ १७२६
३११ त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।
अशस्तिहा जनिता वृत्रतूरसि त्वं तूर्य तरुष्यतः ॥ ९ ॥ ८।९९।५ १६३७
३१२ प्र यो रिरिक्ष ओजसा दिवः सदोभ्यस्परि ।
न त्वा विव्याच रज इन्द्र पार्थिवमति विश्वं ववक्षिथ ॥१०॥ ८।८८।५

स्व० १० । उ० ३ । धा० ७७ । वे ॥

इति द्वितीया दशतिः ॥२॥ अष्टमः खण्डः ॥८॥

इति बृहती समाप्ता ।

[३]

(१-१०) १, २, ६ वसिष्ठो मैत्रावरुणिः; ३ गातुरात्रेयः; ४ पृथुर्वैन्यः; ५ सप्तगुरांगिरसः; ७ गौरिवीतिः शाक्त्यः; ८ वेनो भार्गवः; ९ बृहस्पतिर्नकुलो वा; १० सुहोत्रो भारद्वाजः॥ इन्द्रः; (ऋ० ५ इन्द्रो वैकुण्ठः) ८ वेनः ॥ त्रिष्टुप् ॥

३१३ असावि देवं गोऋजीकमन्धो न्यस्मिन्निन्द्रो जनुषेमुवोच ।
बोधामसि त्वा हर्यश्व यज्ञैर्बोधा न स्तोममन्धसो मदेषु ॥ १ ॥ ७।२१।१
३१४ योनिष्ट इन्द्र सदने अकारि तमा नृभिः पुरुहूत प्र याहि ।
असो यथा नोऽविता वृधश्चिद्ददो वसूनि ममदश्च सोमैः ॥ २ ॥ ७।२४।१
३१५ अदर्दरुत्समसृजो वि खानि त्वमर्णवान्बद्बधानाँ अरम्णाः ।
महान्तमिन्द्र पर्वतं वि यद्वः सृजद्धारा अव यद्दानवान्हन् ॥ ३ ॥ ५।३२।१
३१६ सुष्वाणास इन्द्र स्तुमसि त्वा सनिष्यन्तश्चित्तुविनृम्ण वाजम् ।
आ नो भर सुवितं यस्य कोना तना त्मना सह्याम त्वोताः॥ ४ ॥ १०।१४८।१

३१७ जगृह्मा ते दक्षिणमिन्द्र हस्तं वसूयवो वसुपते वसूनाम्। (ऋग्वेदे) (सामवेदे)
विद्मा हि त्वा गोपतिं शूर गोनामस्मभ्यं चित्रं वृषणं रयिं दाः॥५॥ १०।४७।१

३१८ इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः।
शूरो नृषाता श्रवसश्च काम आ गोमति व्रजे भजा त्वं नः॥६॥ ७।२७।१

३१९ वयः सुपर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः।
अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्या३स्मान्निधयेव बद्धान्॥७॥ १०।७३।११

३२० नाके सुपर्णमुप यत्पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम्॥८॥ १०।१२३।६

३२१ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः॥९॥ (न ऋग्वेदीयः)

३२२ अपूर्व्या पुरुतमान्यस्मै महे वीराय तवसे तुराय।
विरप्शिने वज्रिणे शन्तमानि वचांस्यस्मै स्थविराय तक्षुः॥१०॥ ६।३२।१

स्व० १३। उ० ६। धा० ९१। ट॥

इति तृतीया दशतिः॥३॥ इति नवमः खण्डः॥९॥

[४]

(१-९) १, २, ४ द्युतानो मारुतः (ऋ० तिरश्चीराङ्गिरसः); ३ बृहदुक्थो वामदेव्यः; ५ वामदेवो गौतमः; ६, ८ वसिष्ठो मैत्रावरुणिः; ७ विश्वामित्रो गाथिनः; ९ गौरिवीतिः शाक्त्यः॥ इन्द्रः॥ त्रिष्टुप्, (६ ऋ० विराट्)॥

३२३ अव द्रप्सो अंशुमतीमतिष्ठदीयानः कृष्णो दशभिः सहस्रैः।
आवत्तमिन्द्रः शच्या धमन्तमप स्नीहितिं नृमणा अधद्राः॥१॥ ८।९६।१३

३२४ वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः।
मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासि॥२॥ ८।९६।७

३२५ विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगार।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान॥३॥ १०।५५।५ १७८२

३२६ त्वं ह त्यत्सप्तभ्योऽजायमानोऽशत्रुभ्यो अभवः शत्रुरिन्द्र।
गूढे द्यावापृथिवी अन्वविन्दो विभुमद्भ्यो भुवनेभ्यो रणं धाः॥४॥ ८।९६।१६

३२७ मेडिं न त्वा वज्रिणं भृष्टिमन्तं पुरुधस्मानं वृषभं स्थिरप्स्नुम् । (ऋग्वेदे) (सामवेदे)
करोष्यर्यस्तरुषीर्दुवस्युरिन्द्र द्युक्षं वृत्रहणं गृणीषे ॥ ५ ॥ (न ऋग्वेदीयः)
३२८ प्र वो महे महे वृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम् ।
विशः पूर्वीः प्र चर चर्षणिप्राः ॥ ६ ॥ ७।३१।१० १७९३
३२९ शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि सञ्जितं धनानि ॥ ७ ॥ ३।३०।२२
३३० उदु ब्रह्माण्यैरत श्रवस्येन्द्रं समर्ये महया वसिष्ठ ।
आ यो विश्वानि श्रवसा ततानोपश्रोता म ईवतो वचांसि ॥ ८॥ ७।२३।१
३३१ चक्रं यदस्याप्स्वा निषत्तमुतो तदस्मै मध्विच्चच्छद्यात् ।
पृथिव्यामतिषितं यदूधः पयो गोष्वदधा ओषधीषु ॥ ९ ॥ १०।७३।९

स्व० १६ । उ० ६ । धा० ७२ ॥ कि

इति चतुर्थी दशतिः ॥ ४ ॥ दशमः खण्डः ॥ १० ॥

[ ५ ]

(१-१०) १ अरिष्टनेमिस्तार्क्ष्यः; २ भरद्वाजः (ऋ० गर्गो भारद्वाजः); ३ विमद ऐन्द्रः,वसुकृद्वा वासुक्रः ( ऋ० प्राजापत्यो वा ); ४-६, ९ वामदेवो गौतमः ( ९ ऋ० यमी वैवस्वती ) ७ विश्वामित्रो गाथिनः; ८ रेणुर्वैश्वामित्रः; १० गोतमो राहूगणः ॥ इन्द्रः ( ऋ० १ तार्क्ष्यः; ७ पर्वतेन्द्रौ; ९ यमो वैवस्वतः) ॥ त्रिष्टुप् ॥

३३२ त्यमू षु वाजिनं देवजूतं सहोवानं तरुतारं रथानाम् ।
अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ॥ १ ॥ १०।१७८।१
३३३ त्रातारमिन्द्रमवितारमिन्द्रं हवेहवे सुहवं शूरमिन्द्रम् ।
हुवे नु शक्रं पुरुहूतमिन्द्रमिदं हविर्मघवा वेत्विन्द्रः ॥ २ ॥ ६।४७।११
३३४ यजामह इन्द्रं वज्रदक्षिणं हरीणां रथ्यां३विव्रतानाम् ।
प्र श्मश्रुभिर्दोधुवदूर्ध्वधा भुवद्वि सेनाभिर्भयमानो वि राधसा ॥३॥ १०।२३।१
३३५ सत्राहणं दाधृषिं तुम्रमिन्द्रं महामपारं वृषभं सुवज्रम् ।
हन्ता यो वृत्रं सनितोत वाजं दाता मघानि मघवा सुराधाः ॥४॥ ४।१७।८

३३६ यो नो वनुष्यन्नभिदाति मर्त उगणा वा मन्यमानस्तुरो वा । (ऋग्वेदे) (सामवेदे)
क्षिधी युधा शवसा वा तमिन्द्राभी ष्याम वृषमणस्त्वोताः ॥ ५ ॥(न ऋग्वेदीयः)
३३७ यं वृत्रेषु क्षितय स्पर्धमाना यं युक्तेषु तुरयन्तो हवन्ते ।
यं शूरसातौ यमपामुपज्मन्यं विप्रासो वाजयन्ते स इन्द्रः ॥ ६ ॥(न ऋग्वेदीयः)
३३८ इन्द्रापर्वता बृहता रथेन वामीरिष आ वहतं सुवीराः ।
वीतं हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिडया मदन्ता ॥ ७ ॥ ३।५३।१
३३९ इन्द्राय गिरो अनिशितसर्गा अपः प्रैरयत्सगरस्य बुध्नात् ।
यो अक्षेणेव चक्रियौ शचीभिर्विष्वक्तस्तम्भ पृथिवीमुत द्याम् ॥ ८ ॥१०।८९।४
३४० आ त्वा सखायः सख्या ववृत्युस्तिरः पुरू चिदर्णवां जगम्याः ।
पितुर्नपातमा दधीत वेधा अस्मिन्क्षये प्रतरां दीद्यानः ॥ ९ ॥ १०।१०।१
३४१ को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
आसन्नेषामप्सुवाहो मयोभून्य एषां भृत्यामृणधत्स जीवात् ॥१०॥ १।८४।१६

स्व० १८ । उ० ४ । धा० ८६ । दू ॥

इति पञ्चमी दशतिः ॥५॥ एकादशः खण्डः ॥११॥
इति त्रिष्टुप् समाप्ता ॥ इति चतुर्थप्रपाठकस्य प्रथमोऽर्धः ॥१॥

[ ६ ]

(१-१०) १ मधुच्छन्दा वैश्वामित्रः; २ जेता माधुच्छन्दसः; ३, ६ गोतमो राहूगणः; ४ अत्रिर्भौमः; ५, ८ तिरश्चीराङ्गिरसः; ७ नीपातिथिः काण्वः; ९ विश्वामित्रो गाथिनः; १० तिरश्चीरांगिरसः शंयुर्बार्हस्पत्यो वा ॥ इन्द्रः ॥ अनुष्टुप् ॥

३४२ गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥ १ ॥ १।१०।१ १३४४
३४३ इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः ।
रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥ २ ॥ १।११।१ ८२७
३४४ इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम् ।
शुक्रस्य त्वाभ्यक्षरन्धारा ऋतस्य सादने ॥ ३ ॥ १।८४।४ ९४९

३४५ यदिन्द्र चित्र म इह नास्ति त्वादातमद्रिवः । (ऋग्वेदे) (सामवेदे)
राधस्तन्नो विदद्वस उभयाहस्त्या भर ॥ ४ ॥ ५।३९।१ ११७२
३४६ श्रुधी हवं तिरश्च्या इन्द्र यस्त्वा सपर्यति ।
सुवीर्यस्य गोमतो रायस्पूर्धि महाँ असि ॥ ५ ॥ ८।९५।४ ८८३
३४७ असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।
आ त्वा पृणक्त्विन्द्रियं रजः सूर्यो न रश्मिभिः ॥ ६ ॥ १।८४।१ १०२८
३४८ एन्द्र याहि हरिभिरुप कण्वस्य सुष्टुतिम् ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ७ ॥ ८।३४।१ १८०७
३४९ आ त्वा गिरो रथीरिवास्थुः सुतेषु गिर्वणः ।
अभि त्वा समनूषत गावो वत्सं न धेनवः ॥ ८ ॥ ८।९५।१
३५० एतो न्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना ।
शुद्धैरुक्थैर्वावृध्वांसं शुद्धैराशीर्वान्ममत्तु ॥ ९ ॥ ८।९५।७ १४०२
३५१ यो रयिं वो रयिन्तमो यो द्युम्नैर्द्युम्नवत्तमः ।
सोमः सुतः स इन्द्र तेऽस्ति स्वधापते मदः ॥१०॥ ६।४४।१

स्व० ४ । उ० ४ । धा० ५४ ॥ घी ॥

इति षष्ठी दशतिः ॥६॥ द्वादशः खण्डः ॥१२॥

इति तृतीयोऽध्यायः ॥३॥

## अथ चतुर्थोऽध्यायः ।

[ ७ ]

(१-८) १ भरद्वाजो बार्हस्पत्यः; २ वामदेवो गौतमः, शाकपूतो वा; ३ प्रियमेध आङ्गिरसः; ४ प्रगाथः काण्वः; ५ श्यावाश्व आत्रेयः; ६ शंयुर्बार्हस्पत्यः; ७ वामदेवो गौतमः; ८ जेता माधुच्छन्दसः॥ इन्द्रः; ५ मरुतः; ७ दधिक्रा वा ॥ अनुष्टुप् ॥

३५२ प्रत्यस्मै पिपीषते विश्वानि विदुषे भर ।
अरङ्गमाय जग्मयेऽपश्चाद्दध्वने नरः ॥ १ ॥ ६।४२।१ १४४०
३५३ आ नो वयो वयःशयं महान्तं गह्वरेष्ठां महान्तं पूर्विणेष्ठाम्
उग्रं वचो अपावधीः ॥ २ ॥ (न ऋग्वेदीयः)

(ऋग्वेदे) (सामवेदे)

३५४ आ त्वा रथं यथोतये सुम्नाय वर्तयामसि।
तुविकूर्मिमृतीषहमिन्द्रं शविष्ठ सत्पतिम् ॥ ३ ॥ ८।६८।१ १७७१

३५५ स पूर्व्यो महोनां वेनः क्रतुभिरानजे।
यस्य द्वारा मनुः पिता देवेषु धिय आनजे ॥ ४ ॥ ८।६३।१

३५६ यदी वहन्त्याशवो भ्राजमाना रथेष्वा।
पिबन्तो मदिरं मधु तत्र श्रवांसि कृण्वते ॥ ५ ॥ ( न ऋग्वेदीयः )

३५७ त्यमु वो अप्रहणं गृणीषे शवसस्पतिम्।
इन्द्रं विश्वासाहं नरं शचिष्ठं विश्ववेदसम्। ॥ ६ ॥ ६।४४।४

३५८ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः।
सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत् ॥ ७ ॥ ४।३९।६

३५९ पुरां भिन्दुर्युवा कविरमितौजा अजायत।
इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ॥ ८ ॥ १।११।४ १२५०

स्व० ५। उ० २। धा० ४५। पु ॥

इति सप्तमी दशतिः ॥ ७ ॥ इति प्रथमः खण्डः ॥ १॥

[ ८ ]

( १-१० ) १,३,५ प्रियमेध आङ्गिरसः; २,१० वामदेवो गौतमः; ४ मधुच्छन्दा वैश्वामित्रः; ६ भरद्वाजो बार्हस्पत्यः; ७ अत्रिर्भौमः; ८ प्रस्कण्वः काण्वः; ९ त्रित आप्त्यः ( ऋ० कुत्स आंगिरसो वा )॥ इन्द्रः; ( ६ ऋ० अग्निः ), ८ उषाः; ९ विश्वेदेवाः ॥ अनुष्टुप् ॥

३६० प्रप्र वस्त्रिष्टुभमिषं वन्दद्वीरायेन्दवे।
धिया वो मेधसातये पुरन्ध्या विवासति। ॥ १ ॥ ८।६९।१

३६१ कश्यपस्य स्वर्विदो यावाहुः सयुजाविति।
ययोर्विश्वमपि व्रतं यज्ञं धीरा निचाय्य ॥ २ ॥ ( न ऋग्वेदीयः )

३६२ अर्चत प्रार्चत नरः प्रियमेधासो अर्चत।
अर्चन्तु पुत्रका उत पुरमिद्धृष्ण्वर्चत ॥ ३ ॥ ८।६९।८

(ऋग्वेदे) (सामवेदे)

३६३ उक्थमिन्द्राय शंस्यं वर्धनं पुरुनिःषिधे ।
शक्रो यथा सुतेषु णो रारणत्सख्येषु च ॥ ४ ॥ १।१०।५

३६४ विश्वानरस्य वस्पतिमनानतस्य शवसः ।
एवैश्च चर्षणीनामूती हुवे रथानाम् । ॥ ५ ॥ ८।६८।४

३६५ स घा यस्ते दिवो नरो धिया मर्तस्य शमतः ।
ऊती स बृहतो दिवो द्विषो अंहो न तरति ॥ ६ ॥ ६।२।४

३६६ विभोष्ट इन्द्र राधसो विभ्वी रातिः शतक्रतो ।
अथा नो विश्वचर्षणे द्युम्नं सुदत्र मंहय ॥ ७ ॥ ५।३८।१

३६७ वयश्चित्ते पतत्रिणो द्विपाच्चतुष्पादर्जुनि ।
उषः प्रारन्नृतूँरनु दिवो अन्तेभ्यस्परि ॥ ८ ॥ १।४९।३

३६८ अमी ये देवा स्थन मध्य आ रोचने दिवः ।
कद्व ऋतं कदमृतं का प्रत्ना व आहुतिः ॥ ९ ॥ १।१०५।५

३६९ ऋचं साम यजामहे याभ्यां कर्माणि कृण्वते ।
वि ते सदसि राजतो यज्ञं देवेषु वक्षतः ॥ १० ॥ ( न ऋग्वेदीयः )

स्व० ७। उ० ३। धा० ५४। जी ॥

इति अष्टमी दशतिः ॥८॥ द्वितीयः खण्डः ॥२॥ इत्यनुष्टुभः ॥

[९]

( १-११ ) १ रेभः काश्यपः; २ सुवेदाः शैलूषिः; ३ वामदेवो गौतमः; ४, ७, ८ सव्य आङ्गिरसः; ५ विश्वामित्रो गाथिनः; ६ कृष्ण आङ्गिरसः; ९ भरद्वाजो बार्हस्पत्यः; १० मेधातिथिः काण्वः ( ऋ० मान्धाता यौवनाश्वः ); ११ कुत्स आङ्गिरसः ॥ इन्द्रः; ९ द्यावापृथिवी ॥ जगती; १ अति जगती; १० महापङ्क्तिः ॥

३७० विश्वाः पृतना अभिभूतरं नरः सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे ।
क्रत्वे वरे स्थेमन्यामुरीमुतोग्रमोजिष्ठं तरसं तरस्विनम् ॥ १ ॥ ८।९७।१० ९३०

३७१ श्रत्ते दधामि प्रथमाय मन्यवेऽहन्यद्दस्युं नर्यं विवेरपः ।
उभे यत्त्वा रोदसी धावतामनु भ्यसाते शुष्मात्पृथिवी चिदद्रिवः ॥२॥ १०।१४७।१

३७२ समेत विश्वा ओजसा पतिं दिवो य एक इद्भूरतिथिर्जनानाम् । (ऋग्वेदे) (सामवेदे)
स पूर्व्यो नूतनमाजिगीषं तं वर्तनीरनु वावृत एक इत् ॥ ३ ॥ ( न ऋग्वेदीयः )

३७३ इमे त इन्द्र ते वयं पुरुष्टुत ये त्वारभ्य चरामसि प्रभूवसो ।
न हि त्वदन्यो गिर्वणो गिरः सघत्क्षोणीरिव प्रति तद्धर्य नो वचः ॥४॥ १।५७।४

३७४ चर्षणीधृतं मघवानमुक्थ्या३मिन्द्रं गिरो बृहतीरभ्यनूषत ।
वावृधानं पुरुहूतं सुवृक्तिभिरमर्त्यं जरमाणं दिवेदिवे ॥ ५ ॥ ३।५१।१

३७५ अच्छा व इन्द्रं मतयः स्वर्युवः सध्रीचीर्विश्वा उशतीरनूषत ।
परि ष्वजन्त जनयो यथा पतिं मर्यं न शुन्ध्युं मघवानमूतये ॥६॥ १०।४३।१

३७६ अभि त्यं मेषं पुरुहूतमृग्मियमिन्द्रं गीर्भिर्मदता वस्वो अर्णवम् ।
यस्य द्यावो न विचरन्ति मानुषं भुजे मंहिष्ठमभि विप्रमर्चत ॥७॥ १।५१।१

३७७ त्यं सु मेषं महया स्वर्विदं शतं यस्य सुभुवः साकमीरते ।
अत्यं न वाजं हवनस्यदं रथमिन्द्रं ववृत्यामवसे सुवृक्तिभिः ॥८॥ १।५२।१

३७८ घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा ।
द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा ॥९॥ ६।७०।१

३७९ उभे यदिन्द्र रोदसी आपप्राथोषा इव ।
महान्तं त्वा महीनां सम्राजं चर्षणीनाम् ।
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥१०॥ १०।१३४।१ १०९०

३८० प्र मन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना ।
अवस्यवो वृषणं वज्रदक्षिणं मरुत्वन्तं सख्याय हुवेमहि ॥११॥ १।१०१।१

स्व० १४ । उ० ७ । धा० ९३ । थि ॥

इति नवमी दशतिः ॥९॥ तृतीयः खण्डः ॥३॥

॥ इति जगत्यः ॥

[ १० ]

(१-१०) १ नारदः काण्वः; २, ३ गोषूक्त्यश्वसूक्तिनौ काण्वायनौ; ४ पर्वतः काण्वः; ५-७, १० विश्वमना वैयश्वः; ८ नृमेध आङ्गिरसः; ९ गोतमो राहूगणः ॥ इन्द्रः ॥ उष्णिक् ॥

३८१ इन्द्र सुतेषु सोमेषु क्रतुं पुनीष उक्थ्यम् । (ऋग्वेदे) (सामवेदे)
विदे वृधस्य दक्षस्य महाँ हि षः ॥ १ ॥ ८।१३।१ ७४६

३८२ तमु अभि प्र गायत पुरुहूतं पुरुष्टुतम् ।
इन्द्रं गीर्भिस्तविषमा विवासत ॥ २ ॥ ८।१५।१

३८३ तं ते मदं गृणीमसि वृषणं पृक्षु सासहिम् ।
उ लोककृत्नुमद्रिवो हरिश्रियम् ॥ ३ ॥ ८।१५।४ ८८०

३८४ यत्सोममिन्द्र विष्णवि यद्वा घ त्रित आप्त्ये ।
यद्वा मरुत्सु मन्दसे समिन्दुभिः ॥ ४ ॥ ८।१२।१६

३८५ एदु मधोर्मदिन्तरं सिञ्चाध्वर्यो अन्धसः ।
एवा हि वीरस्तवते सदावृधः । ॥ ५ ॥ ८।२४।१६—१६८४

३८६ एन्दुमिन्द्राय सिञ्चत पिबाति सोम्यं मधु ।
प्र राधांसि चोदयते महित्वना ॥ ६ ॥ ८।२४।१३ १५०९

३८७ एतो न्विन्द्रं स्तवाम सखायः स्तोम्यं नरम् ।
कृष्टीर्यो विश्वा अभ्यस्त्येक इत् ॥ ७ ॥ ८।२४।१९

३८८ इन्द्राय साम गायत विप्राय बृहते बृहत् ।
ब्रह्मकृते विपश्चिते पनस्यवे ॥ ८ ॥ ८।९८।१ १०२५

३८९ य एक इद्विदयते वसु मर्ताय दाशुषे ।
ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ॥ ९ ॥ १।८४।७ १३५१

३९० सखाय आ शिषामहे ब्रह्मेन्द्राय वज्रिणे ।
स्तुष ऊ षु वो नृतमाय धृष्णवे ॥१०॥ ८।२४।१

स्व० १० । उ० ४ । धा० ६२ । खा

इति दशमी दशतिः ॥१०॥ चतुर्थः खण्डः ॥४॥

इति चतुर्थप्रपाठके द्वितीयोऽर्धः, चतुर्थः प्रपाठकश्च समाप्तः ॥

अथ पञ्चमः प्रपाठकः।

[१]

(१-८) १ प्रगाथो घौरः काण्वः; २ भरद्वाजो बार्हस्पत्यः; ३ नृमेध आङ्गिरसः; ४ पर्वतः काण्वः; ५, ७ इरिम्बिठिः काण्वः; ६ विश्वमना वैयश्वः; ८ वसिष्ठो मैत्रावरुणिः ॥ इन्द्रः; ५,७ आदित्याः ॥ उष्णिक्; ८ विराडुष्णिक् ॥

(ऋग्वेदे) (सामवेदे)

३९१ गृणे तदिन्द्र ते शव उपमां देवतातये।
यद्धंसि वृत्रमोजसा शचीपते ॥ १ ॥ ८।६१।८

३९२ यस्य त्यच्छम्बरं मदे दिवोदासाय रन्धयन्।
अयं स सोम इन्द्र ते सुतः पिब ॥ २ ॥ ६।४३।१

३९३ एन्द्र नो गधि प्रिय सत्राजिदगोह्य।
गिरिर्न विश्वतः पृथुः पतिर्दिवः ॥ ३ ॥ ८।९८।४ १२४७

३९४ य इन्द्र सोमपातमो मदः शविष्ठ चेतति।
येना हंसि न्या३त्रिणं तमीमहे ॥ ४ ॥ ८।१२।१

३९५ तुचे तुनाय तत्सु नो द्राघीय आयुर्जीवसे।
आदित्यासः समहसः कृणोतन ॥ ५ ॥ ८।१८।१८

३९६ वेत्था हि निर्ऋतीनां वज्रहस्त परिवृजम्।
अहरहः शुन्ध्युः परिपदामिव ॥ ६ ॥ ८।२४।२४

३९७ अपामीवामप स्त्रिधमप सेधत दुर्मतिम्।
आदित्यासो युयोतना नो अंहसः ॥ ७ ॥ ८।१८।१०

३९८ पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः।
सोतुर्बाहुभ्यां सुयतो नार्वा ॥ ८ ॥ ७।२२।१ ९२७

स्व० ५। उ० २। धा० ५१। फ॥

इति प्रथमा दशतिः ॥१॥ पञ्चमः खण्डः ॥ ५ ॥ इत्युष्णिहः।

[२]

(१-१०) सौभरिः काण्वः; ७, ८ नृमेध आंगिरसः ॥ इन्द्रः; ३, ६ मरुतः ॥ ककुप् ॥

३९९ अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनादसि।
युधेदापित्वमिच्छसे ॥ १ ॥ ८।२१।१३ १३८९

(ऋग्वेदे) (सामवेदे)

४०० यो न इदमिदं पुरा प्र वस्य आनिनाय तमु व स्तुषे ।
सखाय इन्द्रमूतये ॥ २ ॥ ८।२१।९

४०१ आ गन्ता मा रिषण्यत प्रस्थावानो माप स्थात समन्यवः ।
दृढा चिद्यमयिष्णवः ॥ ३ ॥ ८।२०।१

४०२ आ याह्ययमिन्दवेऽश्वपते गोपत उर्वरापते ।
सोमं सोमपते पिब ॥ ४ ॥ ८।२१।३

४०३ त्वया ह स्विद्युजा वयं प्रति श्वसन्तं वृषभ ब्रुवीमहि ।
संस्थे जनस्य गोमतः ॥ ५ ॥ ८।२१।११

४०४ गावश्चिद्धा समन्यवः सजात्येन मरुतः सबन्धवः ।
रिहते ककुभो मिथः ॥ ६ ॥ ८।२०।२१

४०५ त्वं न इन्द्रा भर ओजो नृम्णं शतक्रतो विचर्षणे ।
आ वीरं पृतनासहम् ॥ ७ ॥ ८।९८।१० ११६९

४०६ अधा हीन्द्र गिर्वण उप त्वा काम ईमहे ससृग्महे ।
उदेव ग्मन्त उदभिः ॥ ८ ॥ ८।९८।७ ८३०

४०७ सीदन्तस्ते वयो यथा गोश्रीते मधौ मदिरे विवक्षणे ।
अभि त्वामिन्द्र नोनुमः ॥ ९ ॥ ८।२१।५

४०८ वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः ।
वज्रिं चित्रं हवामहे ॥१०॥ ८।२१।१ ७०८

स्व० २ । उ० २ । धा० ४१ । छ ॥

इति द्वितीया दशतिः ॥२॥ षष्ठः खण्डः ॥६॥ इति ककुभः ॥

[३]

( १-१० ) १-८ गोतमो (सम्मदो वा) राहूगणः; ९ त्रितः आप्त्यः ( ऋ० कुत्स आंगिरसो वा ); १० अवस्युरात्रेयः ॥ इन्द्रः; ९ विश्वेदेवाः; १० अश्विनौ ॥ पंक्तिः ॥

४०९ स्वादोरित्था विषूवतो मधोः पिबन्ति गौर्यः ।
या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभथा वस्वीरनु स्वराज्यम् ॥ १ ॥
१।८४।१० १००५

४१० इत्था हि सोम इन्मदो ब्रह्म चकार वर्धनम् । (ऋग्वेदे) (सामवेदे)
शविष्ठ वज्रिन्नोजसा पृथिव्या निः शशा अहिमर्चन्ननु स्वराज्यम् ॥ २ ॥
१।८०।१

४११ इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः ।
तमिन्महत्स्वाजिषूतिमर्भे हवामहे स वाजेषु प्र नोऽविषत् ॥ ३ ॥
१।८१।१ १००२

४१२ इन्द्र तुभ्यमिदद्रिवोऽनुत्तं वज्रिन्वीर्यम् ।
यद्ध त्यं मायिनं मृगं तव त्यन्माययावधीरर्चन्ननु स्वराज्यम् ॥ ४ ॥
१।८०।७

४१३ प्रेह्यभीहि धृष्णुहि न ते वज्रो नि यंसते ।
इन्द्र नृम्णं हि ते शवो हनो वृत्रं जया अपोऽर्चन्ननु स्वराज्यम् ॥ ५ ॥
१।८०।३

४१४ यदुदीरत आजयो धृष्णवे धीयते धनम् ।
युङ्क्ष्वा मदच्युता हरी कं हनः कं वसौ दधोऽस्माँ इन्द्र वसौ दधः ॥ ६ ॥
१।८१।३ १००४

४१५ अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥ ७ ॥
१।८२।२

४१६ उपो षु शृणुही गिरो मघवन्मातथा इव ।
कदा नः सूनृतावतः कर इदर्थयास इद्योजा न्विन्द्र ते हरी ॥ ८ ॥
१।८२।१

४१७ चन्द्रमा अप्स्वाऽ३न्तरा सुपर्णो धावते दिवि ।
न वो हिरण्यनेमयः पदं विन्दन्ति विद्युतो वित्तं मे अस्य रोदसी ॥ ९ ॥
१।१०५।१

४१८ प्रति प्रियतमं रथं वृषणं वसुवाहनम् ।
स्तोता वामश्विनावृषि स्तोमेभिर्भूषति प्रति माध्वी मम श्रुतं हवम् ॥ १० ॥
५।७५।१ १७४३

स्व० १३ । उ० ५ । धा० ७५ । णु ॥

इति तृतीया दशतिः ॥३॥ सप्तमः खण्डः ॥७॥

[४]

(१-८) १,७ वसुश्रुत आत्रेयः; २, ४ विमद ऐन्द्रः (ऋ० प्राजापत्यो वा, वसुकृद्वा वासुक्रः); ३ सत्यश्रवा आत्रेयः; ५, ६ गोतमो राहूगणः; ८ अंहोमुग्वामदेव्यः; ( ऋ० कुल्मलबर्हिषः शैलूषिर्वा; ) ॥ अग्निः; ३ उषाः; ४ सोमः; ५, ६ इन्द्रः; ८ विश्वेदेवाः ॥ पंक्तिः; ८ बृहती ॥

४१९ आ ते अग्न इधीमहि द्युमन्तं देवाजरम् । (ऋग्वेदे) (सामवेदे)
यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषं स्तोतृभ्य आ भर ॥१॥ ५।६।४

४२० अग्निं न स्ववृक्तिभिर्होतारं त्वा वृणीमहे ।
शीरं पावकशोचिषं वि वो मदे यज्ञेषु स्तीर्णबर्हिषं विवक्षसे ॥२॥ १०।२१।१

४२१ महे नो अद्य बोधयोषो राये दिवित्मती
यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥३॥ ५।७९।१-१७४०

४२२ भद्रं नो अपि वातय मनो दक्षमुत क्रतुम् ।
अथा ते सख्ये अन्धसो वि वो मदे रणा गावो न यवसे विवक्षसे ॥४॥ १०।२५।१

४२३ क्रत्वा महाँ अनुष्वधं भीम आ वावृते शवः ।
श्रिय ऋष्व उपाकयोर्नि शिप्री हरिवां दधे हस्तयोर्वज्रमायसम् ॥५॥ १।८१।१

४२४ स घा तं वृषणं रथमधि तिष्ठाति गोविदम् ।
यः पात्रं हारियोजनं पूर्णमिन्द्र चिकेतति योजा न्विन्द्र ते हरी ॥६॥ १।८२।४

४२५ अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।
अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिन इषं स्तोतृभ्य आ भर ॥७॥
५।६।१ १७३७

४२६ न तमंहो न दुरितं देवासो अष्ट मर्त्यम् ।
सजोषसो यमर्यमा मित्रो नयति वरुणो अति द्विषः ॥ ८ ॥ १०।१२६।१

स्व० ७ । उ० ३ । धा० ५७ । जे ॥

इति चतुर्थी दशतिः ॥४॥ अष्टमः खण्डः ॥८॥

इति पंक्तयः ॥

[५]

(१-१०) ऋण-त्रसदस्यू; (ऋ० १, ३-५, १० अग्नेयो धिष्ण्या ऐश्वराः; २, ६, त्र्यरुणस्त्रैवृष्णः, त्रसदस्युः पौरुकुत्सः) ७ वसिष्ठो मैत्रावरुणिः; ८ वामदेवो गौतमः ॥ पवमानः सोमः; ७ मरुतः; ८ अग्निः ९ वाजिनः ॥ द्विपदा विराट्; ८ पदपंक्तिः; ९ पुरउष्णिक्; २, ६ त्रिपदा अनुष्टुप्पिपीलिकामध्या ॥

(ऋग्वेदे) (सामवेदे)

४२७ परि प्र धन्वेन्द्राय सोम स्वादुर्मित्राय पूष्णे भगाय ॥ १ ॥ ९।१०९।१ १३६७

४२८ पर्यू षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः ।
द्विषस्तरध्या ऋणया न ईरसे ॥ २ ॥ ९।११०।१ १३६४

४२९ पवस्व सोम महान्त्समुद्रः पिता देवानां विश्वाभि धाम॥ ३ ॥ ९।१०९।४ १२४१

४३० पवस्व सोम महे दक्षायाश्वो न निक्तो वाजी धनाय ॥ ४ ॥ ९।१०९।१० १३३२

४३१ इन्दुः पविष्ट चारुर्मदायापामुपस्थे कविर्भगाय ॥ ५ ॥ ९।१०९।१३

४३२ अनु हि त्वा सुतं सोम मदामसि महे समर्यराज्ये ।
वाजाँ अभि पवमान प्र गाहसे ॥ ६ ॥ ९।११०।२ १३६६

४३३ क ईं व्यक्ता नरः सनीडा रुद्रस्य मर्या अथा स्वश्वाः ॥ ७ ॥ ७।५६।१

४३४ अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशम् ।
ऋध्यामा त ओहैः ॥ ८ ॥ ४।१०।१ १७७७

४३५ आविर्मर्या आ वाजं वाजिनो अग्मं देवस्य सवितुः सवम् ।
स्वर्गाँ अर्वन्तो जयत ॥ ९ ॥ ( न ऋग्वेदीयः )

४३६ पवस्व सोम द्युम्नी सुधारो महाँ अवीनामनुपूर्व्यः ॥ १० ॥ ९।१०९।७

स्व० ८ । उ० २ । धा० ३५ । ठु ॥

इति पञ्चमी दशतिः ॥५॥ इति नवमः खण्डः ॥९॥

इति पंचमप्रपाठकस्य प्रथमोऽर्धः ॥१॥

[६]

(१-१०) त्रसदस्युः; ७ संवर्त आंगिरसः॥ इन्द्रः; ६ विश्वेदेवाः; ७ उषाः ॥
द्विपदा विराट् ॥

४३७ विश्वतोदावन्विश्वतो न आ भर यं त्वा शविष्ठमीमहे ॥१॥ ( न ऋग्वेदीयः )

४३८ एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे ॥ २ ॥ ( न ऋग्वेदीयः ) १७६८

(ऋग्वेदे)    (सामवेदे)

४३९ ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ ॥ ३ ॥ ५।३१।४

४४० अनवस्ते रथमश्वाय तक्षुस्त्वष्टा वज्रं पुरुहूत द्युमन्तम् ॥ ४ ॥ (न ऋग्वेदीयः)

४४१ शं पदं मघं रयीषिणो न काममव्रतो हिनोति न स्पृशद्रयिम् ॥५॥ (न ऋग्वेदीयः)

४४२ सदा गावः शुचयो विश्वधायसः सदा देवा अरेपसः ॥ ६ ॥ (न ऋग्वेदीयः)

४४३ आ याहि वनसा सह गावः सचन्त वर्तनिं यदूधभिः ॥ ७ ॥ १०।१७२।१

४४४ उप प्रक्षे मधुमति क्षियन्तः पुष्येम रयिं धीमहे त इन्द्र ॥८॥ (न ऋग्वेदीयः) १११५

४४५ अर्चन्त्यर्कं मरुतः स्वर्का आ स्तोभति श्रुतो युवा स इन्द्रः ॥९॥ (न ऋग्वेदीयः) १११४

४४६ प्र व इन्द्राय वृत्रहन्तमाय विप्राय गाथं गायत यं जुजोषते ॥१०॥ (न ऋग्वेदीयः) १११३

स्व० ७ । उ० २ । धा० ४२ । ष्ठा ॥

इति षष्ठी दशतिः ॥ ६ ॥ दशमः खण्डः ॥१०॥

[ ७ ]

( १-१० ) १ पृषध्रः काण्वः; २, ३, ४ बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्च क्रमेण गोपायना लौपायना वा; ५ संवर्त आंगिरसः; ६ भुवन आप्त्यः, साधनो वा भौवनः; ७ कवष ऐलूषः; ८ भरद्वाजो बार्हस्पत्यः; ९ आत्रेयः; १० वसिष्ठो मैत्रावरुणिः ॥ अग्निः; ५ उषाः; ६, ७, ९ विश्वे देवाः; ३, ४, ८, १० इन्द्रः ॥ द्विपदा विराट्; १० एकपदा ॥

४४७ अचेत्यग्निश्चिकितिर्हव्यवाड्न सुमद्रथः ॥ १ ॥ ८।५६।५

४४८ अग्ने त्वं नो अन्तम उत त्राता शिवो भुवो वरूथ्यः ॥ २ ॥ ५।२४।१    ११०७

४४९ भगो न चित्रो अग्निर्महोनां दधाति रत्नम् ॥ ३ ॥ (न ऋग्वेदीयः)

४५० विश्वस्य प्र स्तोभ पुरो वा सन्यदि वेह नूनम् ॥ ४ ॥ (न ऋग्वेदीयः)

४५१ उषा अप स्वसुष्टमः सं वर्तयति वर्तनिं सुजातता ॥ ५ ॥ १०।१७२।४

४५२ इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः ॥ ६ ॥ १०।१५७।१    १११०

४५३ वि स्रुतयो यथा पथा इन्द्र त्वद्यन्तु रातयः ॥ ७ ॥ (न ऋग्वेदीयः)    १७७०

४५४ अया वाजं देवहितं सनेम मदेम शतहिमाः सुवीराः ॥ ८ ॥ ६।१७।१५

४५५ ऊर्जा मित्रो वरुणः पिन्वतेडाः पीवरीमिषं कृणुही न इन्द्र ॥९॥ (न ऋग्वेदीयः)

४५६ इन्द्रो विश्वस्य राजति ॥ १० ॥ (न ऋग्वेदीयः)

स्व० ५ । उ० ४ । धा० ४१ । भ ॥

इति सप्तमी दशतिः ॥७॥ एकादशः खण्डः ॥११॥

[८]

(१-१०) १, १० गृत्समदः शौनकः; २ गौरांगिरसः; ३, ५, ९, परुच्छेपो दैवोदासिः; ४ रेभः काश्यपः; ६ एवयामरुदात्रेयः; ७ अनानतः पारुच्छेपिः; ८ नकुलः ॥ १,३,४,१० इन्द्रः; २ सूर्यः; ५ विश्वेदेवाः; ६ मरुतः; ७ पवमानः सोमः; ८ सविता; ९ अग्निः ॥ १,१० अष्टिः (१० अतिशक्वरी वा); ३,५, ७-९ अत्यष्टिः; २, ४, ६ अतिजगती (अष्टिर्वा ?) ॥

४५७ (ऋग्वेदे) (सामवेदे)

त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृम्पत्सोममपिबद्विष्णुना सुतं यथावशम्।
स ईं ममाद महि कर्म कर्तवे महामुरुं सैनं सश्चद्देवो देवं सत्य इन्दुः सत्यमिन्द्रम् ॥१॥
२।२२।१ १४८६

४५८ अयं सहस्रमानवो दृशः कवीनां मतिर्ज्योतिर्विधर्म।
ब्रध्नः समीचीरुषसः समैरयदरेपसः
सचेतसः स्वसरे मन्युमन्तश्चिता गोः ॥ २ ॥ ( न ऋग्वेदीयः )

४५९ एन्द्र याह्युप नः परावतो नायमच्छा
विदथानीव सत्पतिरस्ता राजेव सत्पतिः।
हवामहे त्वा प्रयस्वन्तः सुतेष्वा पुत्रासो न
पितरं वाजसातये मंहिष्ठं वाजसातये ॥ ३ ॥ १।१३०।१

४६० तमिन्द्रं जोहवीमि मघवानमुग्रं सत्रा दधानमप्रतिष्कुतं श्रवांसि भूरि।
मंहिष्ठो गीर्भिरा च यज्ञियो ववर्त
राये नो विश्वा सुपथा कृणोतु वज्री ॥ ४ ॥ ८।९७।१३

४६१ अस्तु श्रौषट् पुरो अग्निं धिया दध आ नु
त्यच्छर्धो दिव्यं वृणीमह इन्द्रवायू वृणीमहे।
यद्ध क्राणा विवस्वते नाभा सन्दाय नव्यसे।
अध प्र नूनमुप यन्ति धीतयो देवाँ अच्छ न धीतयः ॥ ५ ॥ १।१३९।१

४६२ प्र वो महे मतयो यन्तु विष्णवे मरुत्वते गिरिजा एवयामरुत्।
प्र शर्धाय प्र यज्यवे सुखादये तवसे
भन्ददिष्टये धुनिव्रताय शवसे ॥ ६ ॥ ५।८७।१

४६३ अया रुचा हरिण्या पुनानो विश्वा द्वेषांसि (ऋग्वेदे) (सामवेदे)
तरति सयुग्वभिः सूरो न सयुग्वभिः ।
धारा पृष्ठस्य रोचते पुनानो अरुषो हरिः ।
विश्वा यद्रूपा परियास्यृक्वभिः सप्तास्येभिर्ऋक्वभिः ॥ ७ ॥ ९।१११।१

४६४ अभि त्यं देवं सवितारमोण्योः कविक्रतु
मर्चामि सत्यसवं रत्नधामभि प्रियं मतिम् ।
ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि
हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः ॥ ८ ॥ ( न ऋग्वेदीयः )

४६५ अग्निं होतारं मन्ये दास्वन्तं वसोः सूनुं
सहसो जातवेदसं विप्रं न जातवेदसम् ।
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।
घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः ॥ ९ ॥ १।१२७।१ १८।१३

४६६ तव त्यन्नर्यं नृतोऽप इन्द्र प्रथमं पूर्व्यं दिवि प्रवाच्यं कृतम् ।
यो देवस्य शवसा प्रारिणा असु रिणन्नपः ।
भुवो विश्वमभ्यदेवमोजसा विदेदूर्जं शतक्रतुर्विदेदिषम् ॥ १० ॥ २।२२।४

स्व० ३ । उ० ६ । धा० १० । ट ॥

इति अष्टमी दशतिः ॥८॥ द्वादशः खण्डः ॥१२॥ इत्यैन्द्रं पर्व काण्डं वा समाप्तम् ॥ इति चतुर्थोऽध्यायः ॥४॥

---

ऐन्द्रकाण्डे ।

गायत्र्यः ११५—२३२ (११८)
तत्र १५५ 'पान्तं' इत्यनुष्टुप् ।
बृहत्यः २३३—३१२ (८०)
त्रिष्टुभः ३१३—३४१ (२९)
तत्र ३२८ 'प्र वो' इति त्रिपाद्विराट् ।
अनुष्टुभः ३४२—३६९ (२८)
जगत्यः ३७०—३८० (११)
तत्र ३७९ 'उभे यदिन्द्रे'ति महापंक्तिः ।
उष्णिहः ३८१—३९८ (१८)
तत्र ३९८ 'पिबे'ति विराट् ।
ककुभः ३९९—४०८ (१०)
पंक्तयः ४०९—४२६ (१८)
तत्र ४२६ 'नतमि'त्युपरिष्टाद्बृहती ।
द्विपदाः ४२७—४५५ (२९)
[तत्र ४२८; ४३२; ४३४; ४३५ अनुष्टुबादयस्तत्रैवोक्ताः ]
अत्यष्टयः ४५६—४६६ (११)
तत्र ५६६ 'इन्द्रो विश्वस्ये'त्येकपदा ।
३५२

| | | | |
|---|---|---|---|
| ऐन्द्रकाण्डस्य | मन्त्रसंख्या | | ३५२ |
| आग्नेयकाण्डस्य | ,, | ,, | ११४ |
| | सर्वयोगः | | ४६६ |

# अथ पावमानं काण्डम् ।

## अथ पञ्चमोऽध्यायः ।

### (१)

(१-१०) १, ४ अमहीयुराङ्गिरसः; २ मधुच्छन्दा वैश्वामित्रः; ३ भृगुर्वारुणिर्जमदग्निर्भार्गवो वा; ५ त्रित आप्त्यः; ६ कश्यपो मारीचः; ७ जमदग्निर्भार्गवः; ८ दृढच्युत आगस्त्यः; ९, १० असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

(ऋग्वेदे) (सामवेदे)

४६७ उच्चा ते जातमन्धसो दिवि सद्भूम्या ददे ।
उग्रं शर्म महि श्रवः ॥ १ ॥ ९।६१।१० ६७२

४६८ स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।
इन्द्राय पातवे सुतः ॥ २ ॥ ९।१।१ ६८९

४६९ वृषा पवस्व धारया मरुत्वते च मत्सरः ।
विश्वा दधान ओजसा ॥ ३ ॥ ९।६५।१० ८०३

४७० यस्ते मदो वरेण्यस्तेना पवस्वान्धसा ।
देवावीरघशंसहा ॥ ४ ॥ ९।६१।१९ ८१५

४७१ तिस्रो वाच उदीरते गावो मिमन्ति धेनवः ।
हरिरेति कनिक्रदत् ॥ ५ ॥ ९।३३।४ ८६९

४७२ इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः ।
अर्कस्य योनिमासदम् ॥ ६ ॥ ९।६४।२२ १०७६

४७३ असाव्यंशुर्मदायाप्सु दक्षो गिरिष्ठाः ।
श्येनो न योनिमासदत् ॥ ७ ॥ ९।६२।४ १००८

४७४ पवस्व दक्षसाधनो देवेभ्यः पीतये हरे ।
मरुद्भ्यो वायवे मदः ॥ ८ ॥ ९।२५।१ ९१९

४७५ परि स्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत्। (ऋग्वेदे) (सामवेदे)
मदेषु सर्वधा असि ॥ ९ ॥ ९।१८।१ १०९३

४७६ परि प्रिया दिवः कविर्वयांसि नप्त्योर्हितः।
स्वानैर्याति कविक्रतुः ॥ १० ॥ ९।९।१ ९३५

स्व० ६। उ० ३। धा० ४२। गा ॥

इति नवमी दशतिः ॥९॥ प्रथमः खण्डः ॥१॥

[ १० ]

( १-१० ) १ ( कविर्मेधावी ) श्यावाश्व आत्रेयः; २ त्रित आप्त्यः; ३, ८ अमहीयुराङ्गिरसः; ४ भृगुर्वारुणिर्जमदग्निर्भार्गवो वा; ५, ६ कश्यपो मारीचः; ७ निध्रुविः काश्यपः; ९, १० असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

४७७ प्र सोमासो मदच्युतः श्रवसे नो मघोनाम्।
सुता विदथे अक्रमुः ॥ १ ॥ ९।३२।१ ७६१

४७८ प्र सोमासो विपश्चितोऽपो नयन्त ऊर्मयः।
वनानि महिषा इव ॥ २ ॥ ९।३३।१ ७६४

४७९ पवस्वेन्दो वृषा सुतः कृधी नो यशसो जने।
विश्वा अप द्विषो जहि ॥ ३ ॥ ९।६१।२८

४८० वृषा ह्यसि भानुना द्युमन्तं त्वा हवामहे।
पवमान स्वर्दृशम् ॥ ४ ॥ ९।६५।४ ७८४

४८१ इन्दुः पविष्ट चेतनः प्रियः कवीनां मतिः।
सृजदश्वं रथीरिव ॥ ५ ॥ ९।६४।१०

४८२ असृक्षत प्र वाजिनो गव्या सोमासो अश्वया।
शुक्रासो वीरयाशवः ॥ ६ ॥ ९।६४।४ १०३४

४८३ पवस्व देव आयुषगिन्द्रं गच्छतु ते मदः।
वायुमा रोह धर्मणा ॥ ७ ॥ ९।६३।२२ १२३५

(ऋग्वेदे) (सामवेदे)

४८४ पवमानो अजीजनद्दिवश्चित्रं न तन्यतुम् ।
ज्योतिर्वैश्वानरं बृहत् ॥ ८ ॥ ९।६१।१६ ८८९

४८५ परि स्वानास इन्दवो मदाय बर्हणा गिरा ।
मधो अर्षन्ति धारया ॥ ९ ॥ ९।१०।४

४८६ परि प्रासिष्यदत्कविः सिन्धोरूर्मावधि श्रितः ।
कारुं बिभ्रत्पुरुस्पृहम् ॥१०॥ ९।१४।१

स्व० ११ । उ० ना । धा० ४९ । हो ॥

इति दशमी दशतिः ॥ द्वितीयः खण्डः ॥

इति पञ्चमप्रपाठकस्य द्वितीयोऽर्धः, पञ्चमः प्रपाठकश्च समाप्तः ॥ ५ ॥

[ १ ]

अथ षष्ठप्रपाठकस्य प्रथमोऽर्धः ॥६॥

( १-१० ) १, ८, ९ अमहीयुरांगिरसः; २ बृहन्मतिराङ्गिरसः; ३ जमदग्निर्भार्गवः; ४ प्रभूवसुरांगिरसः; ५ मेध्यातिथिः काण्वः; ६, ७ निध्रुविः काश्यपः; १० उचथ्य आंगिरसः ॥ पवमानः सोमः ॥ गायत्री ॥

४८७ उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम् ।
इन्दुं देवा अयासिषुः ॥ १ ॥ ९।६१।१३; ७६२,१३३५

४८८ पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः ।
शुम्भन्ति विप्रं धीतिभिः ॥ २ ॥ ९।४०।१ ९२४

४८९ आविशन्कलशं सुतो विश्वा अर्षन्नभि श्रियः ।
इन्दुरिन्द्राय धीयते ॥ ३ ॥ ९।६२।१९

४९० असर्जि रथ्यो यथा पवित्रे चम्वोः सुतः ।
कार्ष्मन्वाजी न्यक्रमीत् ॥ ४ ॥ ९।३६।१

४९१ प्र यद्गावो न भूर्णयस्त्वेषा आयासो अक्रमुः ।
घ्नन्तः कृष्णामप त्वचम् ॥ ५ ॥ ९।४१।१ ८९२

४९२ अपघ्नन्पवसे मृधः क्रतुवित्सोम मत्सरः ।
नुदस्वादेवयुं जनम् ॥ ६ ॥ ९।६३।२४

४९३ अया पवस्व धारया यया सूर्यमरोचयः ।
हिन्वानो मानुषीरपः ॥ ७ ॥ ९।६३।७ १२१६
४९४ स पवस्व य आविथेन्द्रं वृत्राय हन्तवे ।
वव्रिवांसं महीरपः ॥ ८ ॥ ९।६१।२२
४९५ अया वीती परि स्रव यस्त इन्दो मदेष्वा ।
अवाहन्नवतीर्नव ॥ ९ ॥ ९।६१।१ १२१०
४९६ परि द्युक्षं सनद्रयिं भरद्वाजं नो अन्धसा ।
स्वानो अर्ष पवित्र आ ॥ १० ॥ ९।५२।१

स्व० ९। उ० ६। धा० ३५। तु॥

इति प्रथमा दशतिः ॥ १ ॥ तृतीयः खण्डः ॥ ३ ॥

[२]

(१-१४) १ मेधातिथिः काण्वः; २, ७ भृगुर्वारुणिर्जमदग्निर्भार्गवो वा; ३ उचथ्य आङ्गिरसः; ४ अवत्सारः काश्यपः; ५ निध्रुविः काश्यपः; ६, १० असितः काश्यपो देवलो वा; ८, ९ कश्यपो मारीचः; ११ कविर्भार्गवः; १२ जमदग्निर्भार्गवः; १३ अयास्य आंगिरसः; १४ अमहीयुरांगिरसः ॥ पवमानः सोमः ॥ गायत्री ॥

४९७ अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः ।
सं सूर्येण दिद्युते ॥ १ ॥ ९।२।६ १०४२
४९८ आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे ।
पान्तमा पुरुस्पृहम् ॥ २ ॥ ९।६५।२८
४९९ अध्वर्यो अद्रिभिः सुतं सोमं पवित्र आ नय ।
पुनाहीन्द्राय पातवे ॥ ३ ॥ ९।५१।१ १२२५
५०० तरत्स मन्दी धावति धारा सुतस्यान्धसः ।
तरत्स मन्दी धावति ॥ ४ ॥ ९।५८।१ १०५५
५०१ आ पवस्व सहस्रिणं रयिं सोम सुवीर्यम् ।
अस्मे श्रवांसि धारय ॥ ५ ॥ ९।६३।१

५०२ अनु प्रत्नास आयवः पदं नवीयो अक्रमुः।
रुचे जनन्त सूर्यम् ॥ ६ ॥ ९।२३।२

५०३ अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत्।
सीदन्योनौ वनेष्वा ॥ ७ ॥ ९।६५।१९ ११४

५०४ वृषा सोम द्युमाँ असि वृषा देव वृषव्रतः।
वृषा धर्माणि दध्रिषे ॥ ८ ॥ ९।६४।१ ७८१

५०५ इषे पवस्व धारया मृज्यमानो मनीषिभिः।
इन्दो रुचाभि गा इहि ॥ ९ ॥ ९।६४।१३ ८४१

५०६ मन्द्रया सोम धारया वृषा पवस्व देवयुः।
अव्या वारेभिरस्मयुः ॥१०॥ ९।६।१

५०७ अया सोम सुकृत्यया महान्त्सन्नभ्यवर्धथाः।
मन्दान इद्वृषायसे ॥११॥ ९।४७।१

५०८ अयं विचर्षणिर्हितः पवमानः स चेतति।
हिन्वान आप्यं बृहत् ॥१२॥ ९।६२।१०

५०९ प्र न इन्दो महे तु न ऊर्मिं न बिभ्रदर्षसि।
अभि देवाँ अयास्यः ॥१३॥ ९।४४।१

५१० अपघ्नन्पवते मृधोऽप सोमो अराव्णः।
गच्छन्निन्द्रस्य निष्कृतम् ॥१४॥ ९।६१।२५

स्व० १५। उ० २। धा० ५७। फो ॥

इति द्वितीया दशतिः ॥ २ ॥ चतुर्थः खण्डः ॥ ४ ॥ इति गायत्र्यः ॥

[ ३ ]

( १-१२ ) सप्तर्षयः ( १ भरद्वाजो बार्हस्पत्यः; २ कश्यपो मारीचः, ३ गोतमो राहूगणः; ४ अत्रिर्भौमः; ५ विश्वामित्रो गाथिनः; ६ जमदग्निर्भार्गवः; ७ वसिष्ठो मैत्रावरुणिः ) ॥ पवमानः सोमः ॥ बृहती ॥

५११ पुनानः सोम धारयापो वसानो अर्षसि।
आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥१॥ ९।१०७।४ ६७५

(ऋग्वेदे) (सामवेदे)

५१२ परीतो षिञ्चता सुतं सोमो य उत्तमं हविः ।
दधन्वाँ यो नर्यो अप्स्वाऽन्तरा सुषाव सोममद्रिभिः ॥२॥ ९।१०७।१

५१३ आ सोम स्वानो अद्रिभिस्तिरो वाराण्यव्यया ।
जनो न पुरि चम्वोर्विशद्धरिः सदो वनेषु दध्रिषे ॥३॥ ९।१०७।१० १६८९

५१४ प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा ।
अंशोः पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतम् ॥४॥ ९।१०७।१२ ७६७

५१५ सोम उ ष्वाणः सोतृभिरधि ष्णुभिरवीनाम् ।
अश्वयेव हरिता याति धारया मन्द्रया याति धारया ॥५॥ ९।१०७।८ ९९७

५१६ तवाहं सोम रारण सख्य इन्दो दिवेदिवे ।
पुरूणि बभ्रो नि चरन्ति मामव परिधीँरति ताँ इहि ॥६॥ ९।१०७।१९ ९२२

५१७ मृज्यमानः सुहस्त्या समुद्रे वाचमिन्वसि ।
रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥७॥ ९।१०७।२१ १०७९

५१८ अभि सोमास आयवः पवन्ते मद्यं मदम् ।
समुद्रस्याधि विष्टपे मनीषिणो मत्सरासो मदच्युतः ॥८॥ ९।१०७।१४ ८५६

५१९ पुनानः सोम जागृविरव्या वारैः परि प्रियः ।
त्वं विप्रो अभवोऽङ्गिरस्तम मध्वा यज्ञं मिमिक्ष णः ॥९॥ ९।१०७।६

५२० इन्द्राय पवते मदः सोमो मरुत्वते सुतः ।
सहस्रधारो अत्यव्यमर्षति तमी मृजन्त्यायवः ॥१०॥ ९।१०७।१७

५२१ पवस्व वाजसातमोऽभि विश्वानि वार्या ।
त्वं समुद्रः प्रथमे विधर्मं देवेभ्यः सोम मत्सरः ॥११॥ ९।१०७।२३

५२२ पवमाना असृक्षत पवित्रमति धारया ।
मरुत्वन्तो मत्सरा इन्द्रिया हया मेधामभि प्रयांसि च ॥१२॥ ९।१०७।२५

स्व० १९ । उ० ३ । धा० ९१ । द ॥

इति तृतीया दशतिः ॥३॥ पञ्चमः खण्डः ॥५॥ इति बृहत्यः ॥

[ ४ ]

( १-१० ) १, ९ उशना काव्यः; २ वृषगणो वासिष्ठः; ३, ७ पराशरः शाक्त्यः; ४, ६ वसिष्ठो मैत्रावरुणिः; ५, १० प्रतर्दनो दैवोदासिः; ८ प्रस्कण्वः काण्वः ॥ पवमानः सोमः ॥त्रिष्टुप् ॥

(ऋग्वेदे) (सामवेदे)

५२३ प्र तु द्रव परि कोशं नि षीद नृभिः पुनानो अभि वाजमर्ष ।
अश्वं न त्वा वाजिनं मर्जयन्तोऽच्छा बर्ही रशनाभिर्नयन्ति॥१॥ ९।८७।१ ६७७

५२४ प्र काव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति ।
महिव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन् ॥२॥ ९।९७।७ १११६

५२५ तिस्रो वाच ईरयति प्र वह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषाम् ।
गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ॥३॥
९।९७।३४ ८५९

५२६ अस्य प्रेषा हेमना पूयमानो देवो देवेभिः समपृक्त रसम् ।
सुतः पवित्रं पर्येति रेभन् मितेव सद्म पशुमन्ति होता ॥४॥ ९।९७।१ १३९९

५२७ सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः ।
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः॥५॥ ९।९६।५ ९४३

५२८ अभि त्रिपृष्ठं वृषणं वयोधामङ्गोषिणमवावशन्त वाणीः ।
वना वसानो वरुणो न सिन्धुर्वि रत्नधा दयते वार्याणि ॥६॥ ९।९०।२ १४०८

५२९ अक्रान्त्समुद्रः प्रथमे विधर्मं जनयन् प्रजा भुवनस्य गोपाः ।
वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे स्वानो अद्रिः ॥७॥ ९।९७।४०;१२५३

५३० कनिक्रन्ति हरिरा सृज्यमानः सीदन्वनस्य जठरे पुनानः ।
नृभिर्यतः कृणुते निर्णिजं गामतो मतिं जनयत स्वधाभिः॥८॥ ९।९५।१

५३१ एष स्य ते मधुमाँ इन्द्र सोमो वृषा वृष्णः परि पवित्रे अक्षाः ।
सहस्रदाः शतदा भूरिदावा शश्वत्तमं बर्हिरा वाज्यस्थात् ॥९॥ ९।८७।४

५३२ पवस्व सोम मधुमाँ ऋतावापो वसानो अधि सानो अव्ये ।
अव द्रोणानि घृतवन्ति रोह मदिन्तमो मत्सर इन्द्रपानः॥१०॥ ९।९६।१३

स्व० १८ । उ० ३ । धा० ८७ । डे ॥
इति चतुर्थी दशतिः ॥४॥ षष्ठः खण्डः॥६॥

[ ५ ]

( १-१२ ) १ प्रतर्दनो दैवोदासिः; २, १० पराशरः शाक्त्यः; ३ इन्द्रप्रमतिर्वासिष्ठः; ४ वासिष्ठो मैत्रावरुणिः; ५ कर्णश्रुद्वासिष्ठः; ६ नोधा गौतमः; ७ कण्वो घौरः; ८ मन्युर्वासिष्ठः; ९ कुत्स आङ्गिरसः; ११ कश्यपो मारीचः; १२ प्रस्कण्वः काण्वः ॥ पवमानः सोमः ॥ त्रिष्टुप् ॥

५३३ प्र सेनानीः शूरो अग्रे रथानां गव्यन्नेति हर्षते अस्य सेना ।    (ऋग्वेदे) (सामवेदे)
भद्रान् कृण्वन्निन्द्रहवांत्सखिभ्य आ सोमो वस्त्रा रभसानि दत्ते ॥१॥ ९।९६।१

५३४ प्र ते धारा मधुमतीरसृग्रन्वारं यत्पूतो अत्येष्यव्यम् ।
पवमान पवसे धाम गोनां जनयत्सूर्यमपिन्वो अर्कैः ॥ २ ॥ ९।९७।३१

५३५ प्र गायताभ्यर्चाम देवांत्सोमं हिनोत महते धनाय ।
स्वादुः पवतामति वारमव्यमा सीदतु कलशं देव इन्दुः ॥ ३ ॥ ९।९७।४

५३६ प्र हिन्वानो जनिता रोदस्यो रथो न वाजं सनिषन्नयासीत् ।
इन्द्रं गच्छन्नायुधा संशिशानो विश्वा वसु हस्तयोरादधानः ॥४॥ ९।९०।१

५३७ तक्षद्यदी मनसो वेनतो वाग् ज्येष्ठस्य धर्मं द्युक्षोरनीके ।
आदीमायन्वरमा वावशाना जुष्टं पतिं कलशे गाव इन्दुम् ॥५॥ ९।९७।२२

५३८ साकमुक्षो मर्जयन्त स्वसारो दश धीरस्य धीतयो धनुत्रीः ।
हरिः पर्यद्रवज्जाः सूर्यस्य द्रोणं ननक्षे अत्यो न वाजी ॥ ६ ॥ ९।९३।१    १४१८

५३९ अधि यदस्मिन्वाजिनीव शुभः स्पर्धन्ते धियः सूरे न विशः ।
अपो वृणानः पवते कवीयान्व्रजं न पशुवर्धनाय मन्म ॥ ७ ॥ ९।९४।१

५४० इन्दुर्वाजी पवते गोन्योघा इन्द्रे सोमः सह इन्वन्मदाय ।
हन्ति रक्षो बाधते पर्यरातिं वरिवस्कृण्वन्वृजनस्य राजा ॥ ८ ॥ ९।९७।१०    १०१२

५४१ अया पवा पवस्वैना वसूनि माँश्चत्व इन्दो सरसि प्र धन्व ।
ब्रध्नश्चिद्यस्य वातो न जूतिं पुरुमेधाश्चित्तकवे नरं धात् ॥ ९ ॥ ९।९७।५२    ११०४

५४२ महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान् ।
अदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुः ॥१०॥ ९।९७।४१    १२५५

(ऋग्वेदे) (सामवेदे)

५४३ असर्जि वक्वा रथ्ये यथाजौ धिया मनोता प्रथमा मनीषा ।
दश स्वसारो अधि सानो अव्ये मृजन्ति वह्निं सदनेष्वच्छ ॥११॥ ९।९१।१

५४४ अपामिवेदूर्मयस्ततुराणाः प्र मनीषा ईरते सोममच्छ ।
नमस्यन्तीरुप च यन्ति सं चाच विशन्त्युशतीरुशन्तम् ॥१२॥ ९।९५।३

स्व० १९ । उ० ३ । धा० ८२ । दा॥

इति पञ्चमी दशतिः ॥५॥ सप्तमः खण्डः ॥७॥ इति त्रिष्टुभः ॥ इति षष्ठप्रपाठकस्य प्रथमोऽर्धः ॥६॥

[ ६ ]

( १-९ ) १ अन्धीगुः श्यावाश्विः; २ नहुषो मानवः; ३ ययातिर्नाहुषः; ४ मनुः सांवरणः; ५, ८ अम्बरीषो वार्षागिरः ऋजिश्वा भारद्वाजश्च; ६, ७ रेभसूनू काश्यपौ; ९ प्रजापतिर्वैश्वामित्रो वाच्यो वा ॥
पवमानः सोमः ॥ अनुष्टुप्; ७ बृहती ॥

अथ षष्ठप्रपाठकस्य द्वितीयोऽर्धः ॥६॥

५४५ पुरोजिती वो अन्धसः सुताय मादयित्नवे ।
अप श्वानं श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥ १ ॥ ९।१०१।१ ६९७

५४६ अयं पूषा रयिर्भगः सोमः पुनानो अर्षति ।
पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ॥ २ ॥ ९।१०१।७ ८१८

५४७ सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः ।
पवित्रवन्तो अक्षरन् देवान् गच्छन्तु वो मदाः ॥ ३ ॥ ९।१०१।४ ८७२

५४८ सोमाः पवन्त इन्दवोऽस्मभ्यं गातुवित्तमाः ।
मित्राः स्वाना अरेपसः स्वाध्यः स्वर्विदः ॥ ४ ॥ ९।१०१।१० ११०१

५४९ अभी नो वाजसातमं रयिमर्ष शतस्पृहम् ।
इन्दो सहस्रभर्णसं तुविद्युम्नं विभासहम् ॥ ५ ॥ ९।९८।१ १२३८

५५० अभी नवन्ते अद्रुहः प्रियमिन्द्रस्य काम्यम् ।
वत्सं न पूर्व आयुनि जातं रिहन्ति मातरः ॥ ६ ॥ ९।१००।१

५५१ आ हर्यताय धृष्णवे धनुष्टन्वन्ति पौंस्यम् ।
शुक्रा वि यन्त्यसुराय निर्णिजे विपामग्रे महीयुवः ॥ ७ ॥ ९।९९।१

५५२ परि त्यं हर्यतं हरिं बभ्रुं पुनन्ति वारेण । (ऋग्वेदे) (सामवेदे)
यो देवान्विश्वा इत्परि मदेन सह गच्छति ॥ ८ ॥ ९।९८।७ १३२९
५५३ प्र सुन्वानायान्धसो मर्तो न वष्ट तद्वचः ।
अप श्वानमराधसं हता मखं न भृगवः ॥ ९ ॥ ९।१०१।१३ ७७४,१३८६

स्व० १० । उ० ५ । धा० ६१ । म ॥

इति षष्ठी दशतिः ॥६॥ अष्टमः खण्डः ॥८॥ इत्यनुष्टुभः ( एका बृहती )॥

[ ७ ]

(१-१२) १-३,५ कविर्भार्गवः; ४, ६ सिकता निवावरी; ७ रेणुर्वैश्वामित्रः; ८ वेनो भार्गवः; ९ वसुर्भारद्वाजः; १० वत्सप्रिर्भालन्दः; ११ गृत्समदः शौनकः; १२ पवित्र आङ्गिरसः ॥
पवमानः सोमः ॥ जगती ॥

५५४ अभि प्रियाणि पवते चनोहितो नामानि यह्वो अधि येषु वर्धते ।
आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वञ्चमरुहद्विचक्षणः ॥ १ ॥ ९।७५।१ ७००
५५५ अचोदसो नो धन्वन्त्विन्दवः प्र स्वानासो बृहद्देवेषु हरयः ।
वि चिदश्नाना इषयो अरातयोऽर्यो नः सन्तु सनिषन्तु नो धियः ॥२॥ ९।७९।१
५५६ एष प्र कोशे मधुमाँ अचिक्रददिन्द्रस्य वज्रो वपुषो वपुष्टमः ।
अभ्यृ३तस्य सुदुघा घृतश्चुतो वाश्रा अर्षन्ति पयसा च धेनवः ॥३॥ ९।७७।१
५५७ प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतं सखा सख्युर्न प्र मिनाति सङ्गिरम् ।
मर्य इव युवतिभिः समर्षति सोमः कलशे शतयामना पथा ॥४॥ ९।८६।१६; ११५२
५५८ धर्ता दिवः पवते कृत्व्यो रसो दक्षो देवानामनुमाद्यो नृभिः ।
हरिः सृजानो अत्यो न सत्वभिर्वृथा पाजांसि कृणुषे नदीष्वा ॥५॥ ९।७६।१ १२२८
५५९ वृषा मतीनां पवते विचक्षणः सोमो अह्नां प्रतरीतोषसां दिवः ।
प्राणा सिन्धूनां कलशाँ अचिक्रददिन्द्रस्य हार्द्याविशन्मनीषिभिः ॥६॥
९।८६।१९ ८२१
५६० त्रिरस्मै सप्त धेनवो दुदुह्रिरे सत्यामाशिरं परमे व्योमनि ।
चत्वार्यन्या भुवनानि निर्णिजे चारूणि चक्रे यदृतैरवर्धत ॥७॥ ९।७०।१ १४२३

(ऋग्वेदे) (सामवेदे)

५६१ इन्द्राय सोम सुषुतः परि स्रवापामीवा भवतु रक्षसा सह ।
मा ते रसस्य मत्सत द्वयाविनो द्रविणस्वन्त इह सन्त्विन्दवः ॥८॥ ९।८५।१

५६२ असावि सोमो अरुषो वृषा हरी राजेव दस्मो अभि गा अचिक्रदत् ।
पुनानो वारमत्येष्यव्ययं श्येनो न योनिं घृतवन्तमासदत् ॥९॥ ९।८२।१

५६३ प्र देवमच्छा मधुमन्त इन्दवोऽसिष्यदन्त गाव आ न धेनवः ।
बर्हिषदो वचनावन्त ऊधभिः परिस्रुतमुस्रिया निर्णिजं धिरे ॥१०॥ ९।६८।१

५६४ अञ्जते व्यञ्जते समञ्जते क्रतुं रिहन्ति मध्वाभ्यञ्जते ।
सिन्धोरुच्छ्वासे पतयन्तमुक्षणं हिरण्यपावाः पशुमप्सु गृभ्णते ॥११॥
९।८६।४३ १६१४

५६५ पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तः सं तदाशत ॥१२॥ ९।८३।१ ८७५

स्व० १५ । उ० ११ । धा० १३७ । पे ॥

इति सप्तमी दशतिः ॥७॥ नवमः खण्डः ॥९॥ इति जगत्यः ॥

[८]

(१-१२) १,७, ११ अग्निश्चाक्षुषः; २ चक्षुर्मानवः; ३, ४, ९, १० पर्वतनारदौ काण्वौ (३, १० शिखण्डिन्यावप्सरसौ काश्यपौ वा); ५ त्रित आप्त्यः; ६ मनुराप्सवः; ८,१२ द्वित आप्त्यः; ॥ पवमानः सोमः ॥ उष्णिक् ॥

५६६ इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः ।
श्रुष्टे जातास इन्दवः स्वर्विदः ॥१॥ ९।१०६।१ ६९४

५६७ प्र धन्वा सोम जागृविरिन्द्रायेन्दो परि स्रव ।
द्युमन्तं शुष्ममा भर स्वर्विदम् ॥२॥ ९।१०६।४

५६८ सखाय आ नि षीदत पुनानाय प्र गायत ।
शिशुं न यज्ञैः परि भूषत श्रिये ॥३॥ ९।१०४।१ ११५७

५६९ तं वः सखायो मदाय पुनानमभि गायत ।
शिशुं न हव्यैः स्वदयन्त गूर्तिभिः ॥४॥ ९।१०५।१ १०९८

५७० प्राणा शिशुर्महीनां हिन्वन्नृतस्य दीधितिम् ।   (ऋग्वेदे)   (सामवेदे)
विश्वा परि प्रिया भुवदध द्विता   ॥ ५ ॥   ९।१०२।१   १०१३

५७१ पवस्व देववीतय इन्दो धाराभिरोजसा ।
आ कलशं मधुमान्त्सोम नः सदः   ॥ ६ ॥   ९।१०६।७   १३२६

५७२ सोमः पुनान ऊर्मिणाव्यं वारं वि धावति ।
अग्रे वाचः पवमानः कनिक्रदत्   ॥ ७ ॥   ९।१०६।१०   ९५०

५७३ प्र पुनानाय वेधसे सोमाय वच उच्यते ।
भृतिं न भरा मतिभिर्जुजोषते   ॥ ८ ॥   ९।१०३।१

५७४ गोमन्न इन्दो अश्ववत्सुतः सुदक्ष धनिव ।
शुचिं च वर्णमधि गोषु धारय   ॥ ९ ॥   ९।१०५।४   १६११

५७५ अस्मभ्यं त्वा वसुविदमभि वाणीरनूषत ।
गोभिष्टे वर्णमभि वासयामसि   ॥ १० ॥   ९।१०४।४

५७६ पवते हर्यतो हरिरति ह्वरांसि रंह्या ।
अभ्यर्ष स्तोतृभ्यो वीरवद्यशः   ॥ ११ ॥   ९।१०६।१३   ७७३

५७७ परि कोशं मधुश्चुतं सोमः पुनानो अर्षति ।
अभि वाणीर्ऋषीणां सप्ता नूषत   ॥ १२ ॥   ९।१०३।३

स्व० ८ । उ० ३ । धा० ४६ । ठ ॥

इत्यष्टमी दशतिः ॥८॥ दशमः खण्डः ॥१०॥

[९]

(१-८) १ गौरवीतिः शाक्त्यः; २ उर्ध्वसद्मा आङ्गिरसः; ३, ८ ऋजिश्वा भारद्वाजः; ४ कृतयशा आंगिरसः; ५ ऋणंचयो राजर्षिः; ६ शक्तिर्वासिष्ठः; ७ ऊरुरांगिरसः ॥ पवमानः सोमः ॥
ककुप्, ५ यवमध्या गायत्री ॥

५७८ पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः ।
महि द्युक्षतमो मदः   ॥ १ ॥   ९।१०८।१   ६९२

५७९ अभि द्युम्नं बृहद्यश इषस्पते दिदीहि देव देवयुम् ।
वि कोशं मध्यमं युव   ॥ २ ॥   ९।१०८।९   १०११

५८० आ सोता परि षिञ्चताश्वं न स्तोममप्तुरं रजस्तुरम् । (ऋग्वेदे) (सामवेदे)
वनप्रक्षमुदप्रुतम् ॥ ३ ॥ ९।१०८।७ १३९४
५८१ एतमु त्यं मदच्युतं सहस्रधारं वृषभं दिवोदुहम् ।
विश्वा वसूनि बिभ्रतम् ॥ ४ ॥ ९।१०८।११
५८२ स सुन्वे यो वसूनां यो रायामानेता य इडानाम् ।
सोमो यः सुक्षितीनाम् ॥ ५ ॥ ९।१०८।१३ १०९६
५८३ त्वं ह्यारेङ्ग दैव्यं पवमान जनिमानि द्युमत्तमः ।
अमृतत्वाय घोषयन् ॥ ६ ॥ ९।१०८।३ ९३८
५८४ एष स्य धारया सुतोऽव्या वारेभिः पवते मदिन्तमः ।
क्रीडन्नूर्मिरपामिव ॥ ७ ॥ ९।१०८।५
५८५ य उस्रिया अपि या अन्तरश्मनि निर्गा अकृन्तदोजसा ।
अभि व्रजं तत्निषे गव्यमश्व्यं वर्मीव धृष्णवा रुज ।
ओ३म् वर्मीव धृष्णवा रुज ॥ ८ ॥ ९।१०८।६

स्व० ७ । उ० १ । धा० ४३ । त्रि ॥

इति नवमी दशतिः ॥ ९ ॥ एकादशः खण्डः ॥११॥ इत्युष्णिक्ककुभः ॥
इति षष्ठप्रपाठकस्य द्वितीयोऽर्धः षष्ठप्रपाठकश्च समाप्तः ॥ ६ ॥ इति पञ्चमोऽध्यायः ॥ ५ ॥
इति छन्दोगप्रकृतिऋक् समाप्ता ॥ इति सौम्यं पावमानं काण्डं पर्व वा समाप्तम् ॥

## ॥ इति पूर्वार्चिकः ( छन्द आर्चिकः ) समाप्तः ॥

### पावमानकाण्डस्य मन्त्रसंख्या ११९

| | | |
|---|---|---|
| तत्र गायत्र्यः | ४६७—५१० | ( ४४ ) |
| बृहत्यः | ५११—५२२ | ( १२ ) |
| त्रिष्टुभः | ५२३—५४४ | ( २२ ) |
| अनुष्टुभः | ५४५—५५३ | ( ९ ) |
| [ तत्र 'आहर्यत' इति ५५१ बृहती ] | | |
| जगत्यः | ५५४—५६५ | ( १२ ) |
| उष्णिक्ककुभः | ५६६—५८५ | ( २० ) |
| | | ११९ |

| | | |
|---|---|---|
| ऐन्द्रकाण्डस्य | मन्त्रसंख्या | ३५२ |
| आग्नेयकाण्डस्य | ,, | ११४ |
| सर्वयोगः | | ५८५ |

# अथ आरण्यं काण्डम् ।

## अथ षष्ठोऽध्यायः ।

[१]

( १-९ ) १ शंयुर्बार्हस्पत्यः (भरद्वाजः); २ वसिष्ठो मैत्रावरुणिः; ३, ६ वामदेवो गौतमः; ४ शुनःशेप आजीगर्तिः कृत्रिमो देवरातो वैश्वामित्रो वा; ५ कुत्स आंगिरसः (गृत्समदः); ७, ८ अमहीयुरांगिरसः; ९आत्मा ॥ इन्द्रः; ४ वरुणः; ५, ७, ८ पवमानः सोमः; ६ विश्वे देवाः; ९ अन्नम् ॥
१ बृहती; २, ४, ५, ९ त्रिष्टुप्; ३, ७-८ गायत्री; ६ एकपाज्जगती ॥

(ऋग्वेदे) (सामवेदे)

५८६ इन्द्र ज्येष्ठं न आ भर ओजिष्ठं पुपुरि श्रवः ।
यद्दिधृक्षेम वज्रहस्त रोदसी उभे सुशिप्र पप्राः ॥ १ ॥ ६।४६।५

५८७ इन्द्रो राजा जगतश्चर्षणीनामधिक्षमा विश्वरूपं यदस्य ।
ततो ददाति दाशुषे वसूनि चोदद्राध उपस्तुतं चिदर्वाक् ॥२॥ ७।२७।३

५८८ यस्येदमा रजोयुजस्तुजे जने वनं स्वः ।
इन्द्रस्य रन्त्यं बृहत् ॥ ३ ॥ ( न ऋग्वेदीयः )

५८९ उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय
अथादित्य व्रते वयं तवानागसो अदितये स्याम ॥ ४ ॥ १।२४।१५

५९० त्वया वयं पवमानेन सोम भरे कृतं वि चिनुयाम शश्वत् ।
तन्नो मित्रो वरुणो मामहन्ता
मदितिः सिन्धुः पृथिवी उत द्यौः ॥ ५ ॥ ९।९७।५८

५९१ इमं वृषणं कृणुतैकमिन्माम् ॥ ६ ॥ ( न ऋग्वेदीयः )

५९२ स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः ।
वरिवोवित्परिस्रव ॥ ७ ॥ ९।६१।१२ ६७३

५९३ एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम् ।
सिषासन्तो वनामहे ॥ ८ ॥ ९।६१।११ ६७४

५९४ अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाम ।
यो मा ददाति स इदेवमावदहमन्नमन्नमदन्तमद्मि ॥ ९ ॥ ( न ऋग्वेदीयः )

इति प्रथमा दशतिः ॥ प्रथमः खण्डः ॥१॥

[२]

(१-७) १ श्रुतकक्ष आङ्गिरसः; २ पवित्र आङ्गिरसः; ३, ४ मधुच्छन्दा वैश्वामित्रः; ५ प्रथो वासिष्ठः; ६ गृत्समदः शौनकः; ७ नृमेधपुरुमेधावांगिरसौ ॥ इन्द्रः; २ पवमानः सोमः; ५ विश्वे देवाः; ६ वायुः ॥ गायत्री, २ जगती, ५ त्रिष्टुप्, ७ अनुष्टुप् ॥

(ऋग्वेदे) (सामवेदे)

५९५ त्वमेतदधारयः कृष्णासु रोहिणीषु च ।
परुष्णीषु रुशत्पयः ॥ १ ॥ ८।९३।१३

५९६ अरूरुचदुषसः पृश्निरग्रिय उक्षा बिभेति भुवनेषु वाजयुः ।
मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमादधुः ॥२॥ ९।८३।३ ८७७

५९७ इन्द्र इद्धर्योः सचा सम्मिश्ल आ वचोयुजा ।
इन्द्रो वज्री हिरण्ययः ॥ ३ ॥ १।७।२ ७९७

५९८ इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च ।
उग्र उग्राभिरूतिभिः ॥ ४ ॥ १।७।४ ७९८

५९९ प्रथश्च यस्य सप्रथश्च नामानुष्टुभस्य हविषो हविर्यत् ।
धातुर्द्युतानात्सवितुश्च विष्णो रथन्तरमा जभारा वसिष्ठः॥५॥ १०।१८१।१

६०० नियुत्वान्वायवा गह्ययं शुक्रो अयामि ते ।
गन्तासि सुन्वतो गृहम् ॥ ६ ॥ २।४१।२

६०१ यज्ञायथा अपूर्व्य मघवन्वृत्रहत्याय ।
तत्पृथिवीमप्रथयस्तदस्तभ्ना उतो दिवम् ॥ ७ ॥ ८।८९।५ १४२९

इति द्वितीया दशतिः ॥ द्वितीय खण्डः ॥ २ ॥

[३]

(१-१३) १, ५, ७, १० वामदेवो गौतमः; २, ३, गोतमो राहूगणः; ४ मधुच्छन्दा वैश्वामित्रः; ६ गृत्समदः शौनकः; ८ भरद्वाजो बार्हस्पत्यः; ९ ऋजिश्वा भारद्वाजः; ११ हिरण्यस्तूप आंगिरसः; १२, १३ विश्वामित्रो गाथिनः (१२ ब्रह्म) ॥ १ प्रजापतिः; २, ३ सोमः; ४, ५, ८, १३ अग्निः; ६ अपांनपात्; ७ रात्रिः; ९ विश्वे देवाः; १० लिंगोक्ताः; ११ इन्द्रः; १२ आत्मा अग्निर्वा ॥ त्रिष्टुप्; १, ७ अनुष्टुप्; ४ गायत्री; ८, ९ जगती; १० महापंक्तिः ॥

६०२ मयि वर्चो अथो यशोऽथो यज्ञस्य यत्पयः ।
परमेष्ठी प्रजापतिर्दिवि द्यामिव दृंहतु ॥ १ ॥ (न ऋग्वेदीयः)

६०३ सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः । (ऋग्वेदे) (सामवेदे)
आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ॥२॥ १।९१।१८

६०४ त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः ।
त्वमाततनोरुर्वा३न्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥ ३ ॥ १।९१।२२

६०५ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातमम् ॥ ४ ॥ १।१।१

६०६ ते मन्वत प्रथमं नाम गोनां त्रिः सप्त परमं नाम जानन् ।
ता जानतीरभ्यनूषत क्षा आविर्भुवन्नरुणीर्यशसा गावः ॥ ५ ॥ ४।१।१६

६०७ समन्या यन्त्युपयन्त्यन्याः समानमूर्वं नद्यस्पृणन्ति ।
तमू शुचिं शुचयो दीदिवांसमपान्नपातमुप यन्त्यापः ॥ ६ ॥ २।३५।३

६०८ आ प्रागाद्भद्रा युवतिरह्नः केतून्त्समीर्त्सति ।
अभूद्भद्रा निवेशनी विश्वस्य जगतो रात्री ॥ ७ ॥ ( न ऋग्वेदीयः )

६०९ प्रक्षस्य वृष्णो अरुषस्य नू महः प्र नो वचो विदथा जातवेदसे ।
वैश्वानराय मतिर्नव्यसे शुचिः सोम इव पवते चारुरग्नये ॥ ८ ॥ ६।८।१

६१० विश्वे देवा मम शृण्वन्तु यज्ञमुभे रोदसी अपां नपाच्च मन्म ।
मा वो वचांसि परिचक्ष्याणि वोचं सुम्नेष्विद्वो अन्तमा मदेम ॥ ९ ॥ ६।५२।१४

६११ यशो मा द्यावापृथिवी यशो मेन्द्रबृहस्पती ।
यशो भगस्य विन्दतु यशो मा प्रतिमुच्यताम् ।
यशसा३स्याः संसदोऽहं प्रवदिता स्याम् । ॥१०॥ (न ऋग्वेदीयः)

६१२ इन्द्रस्य नु वीर्याणि प्रवोचं यानि चकार प्रथमानि वज्री ।
अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानाम् ॥११॥ १।३२।१

६१३ अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् ।
त्रिधातुरर्को रजसो विमानोऽजस्रं ज्योतिर्हविरस्मि सर्वम् ॥१२॥ ३।२६।७

(ऋग्वेदे) (सामवेदे)

६१४ पात्यग्निर्विपो अग्रं पदं वेः पाति यह्वश्चरणं सूर्यस्य।
पाति नाभा सप्तशीर्षाणमग्निः पाति देवानामुपमादमृष्वः॥१३॥ ३.५।५

इति तृतीया दशतिः॥ तृतीयः खण्डः॥३॥

[ ४ ]

( १-१२ ) वामदेवो गौतमः; ३-७ नारायणः॥ १-२ अग्निः; ३-७ पुरुषः; ८ द्यावापृथिवी; ९-११ इन्द्रः; १२ गावः॥ अनुष्टुप्; १-२ पंक्तिः; ८,११,१२ त्रिष्टुप्॥

६१५ आजन्त्यग्ने समिधान दीदिवो जिह्वा चरत्यन्तरासनि।
स त्वं नो अग्ने पयसा वसुविद्रयिं वर्चो दृशेऽदाः ॥ १ ॥ ( न ऋग्वेदीयः )
६१६ वसन्त इन्नु रन्त्यो ग्रीष्म इन्नु रन्त्यः।
वर्षाण्यनु शरदो हेमन्तः शिशिर इन्नु रन्त्यः ॥ २ ॥ ( न ऋग्वेदीयः )
६१७ सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात्।
स भूमिं सर्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ ३ ॥ १०।९०।१
६१८ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः।
तथा विष्वङ् व्यक्रामदशनानशने अभि ॥ ४ ॥ १०।९०।४
६१९ पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्।
पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ५ ॥ १०।९०।२
६२० तावानस्य महिमा ततो ज्यायाँश्च पूरुषः।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ ६ ॥ १०।९०।३
६२१ ततो विराडजायत विराजो अधि पूरुषः।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ७ ॥ १०।९०।५
६२२ मन्ये वां द्यावापृथिवी सुभोजसौ ये अप्रथेथाममितमभि योजनम्।
द्यावापृथिवी भवतं स्योने ते नो मुञ्चतमंहसः ॥ ८ ॥ ( न ऋग्वेदीयः )
६२३ हरी त इन्द्र श्मश्रूण्युतो ते हरितौ हरी।
तं त्वा स्तुवन्ति कवयः पुरुषासो वनर्गवः ॥ ९ ॥ ( न ऋग्वेदीयः )

६२४ यद्वर्चो हिरण्यस्य यद्वा वर्चो गवामुत । (ऋग्वेदे) (सामदेवे)
सत्यस्य ब्रह्मणो वर्चस्तेन मा संसृजामसि ॥१०॥ (न ऋग्वेदीयः)

६२५ सहस्तन्न इन्द्र दद्ध्योज ईशे ह्यस्य महतो विरप्शिन् ।
क्रतुं न नृम्णं स्थविरं च वाजं वृत्रेषु शत्रून्त्सहना कृधी नः॥११॥ (न ऋग्वेदीयः)

६२६ सहर्षभाः सहवत्सा उदेत विश्वा रूपाणि बिभ्रतीर्द्व्यूध्नीः ।
उरुः पृथुरयं वो अस्तु लोक इमा आपः सुप्रपाणा इह स्त ॥१२॥ (न ऋग्वेदीयः)

इति चतुर्थी दशतिः ॥ चतुर्थः खण्डः ॥ ४ ॥

[ ५ ]

( १-१४ ) १ शतं वैखानसाः; २ विभ्राट् सौर्यः; ३ कुत्स आङ्गिरसः; ४-६ सार्पराज्ञी;७-१४ प्रस्कण्वः काण्वः ॥ सूर्यः; १ अग्निः पवमानः; ४-६ आत्मा वा ॥ गायत्री; २ जगती; ३ त्रिष्टुप् ॥

६२७ अग्न आयूंषि पवस आसुवोर्जमिषं च नः ।
आरे बाधस्व दुच्छुनाम् ॥ १ ॥ ९।६६।१९;१५१८,१४६४

६२८ विभ्राड् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् ।
वातजूतो यो अभिरक्षति त्मना प्रजाः पिपर्ति बहुधा वि राजति॥२॥१०।१७०।१;१४५२

६२९ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च॥३॥ १।११५।१

६३० आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः ।
पितरं च प्रयन्त्स्वः ॥ ४ ॥ १०।१८९।१ १३७६

६३१ अन्तश्चरति रोचनास्य प्राणादपानती ।
व्यख्यन्महिषो दिवम् ॥ ५ ॥ १०।१८९।२ १३७७

६३२ त्रिंशद्धाम वि राजति वाक्पतङ्गाय धीयते ।
प्रति वस्तोरह द्युभिः ॥ ६ ॥ १०।१८९।३ १३७८

६३३ अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः ।
सूराय विश्वचक्षसे ॥ ७ ॥ १।५०।२

(ऋग्वेदे) (सामवेदे)

६३४ अदृश्रन्नस्य केतवो वि रश्मयो जनाँ अनु ।
भ्राजन्तो अग्नयो यथा ॥ ८ ॥ १।५०।३

६३५ तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य ।
विश्वमाभासि रोचनम् ॥ ९ ॥ १।५०।४

६३६ प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान् ।
प्रत्यङ् विश्वं स्वर्दृशे ॥१०॥ १।५०।५

६३७ येना पावक चक्षसा भुरण्यन्तं जनाँ अनु ।
त्वं वरुण पश्यसि ॥११॥ १।५०।६

६३८ उद्द्यामेषि रजः पृथ्वहा मिमानो अक्तुभिः ।
पश्यञ्जन्मानि सूर्य ॥१२॥ १।५०।७

६३९ अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः ।
ताभिर्याति स्वयुक्तिभिः ॥१३॥ १।५०।९

६४० सप्त त्वा हरितो रथे वहन्ति देव सूर्य ।
शोचिष्केशं विचक्षण । ॥१४॥ १।५०।८

इति पञ्चमी दशतिः॥ पञ्चमः खण्डः ॥ ५ ॥

इति षष्ठोऽध्यायः ॥६॥ इति सामवेद-संहितायामारण्यं काण्डं पर्व वा समाप्तम्॥

# अथ महानाम्न्यार्चिकः ।

( १-१० ) प्रजापतिः ॥ इन्द्रस्त्रैलोक्यात्मा ॥ त्रिकं = [ १ प्रथमं द्विपदा + (२) ततस्त्रयः शाक्वराः पादाः + (३) तत उपसर्गौ + (४) उभयं ( शाक्वरोपसर्गौ ) + ( ५ ) ततः शाक्वरास्त्रयः पादाः + (६) उपसर्गः । ]

६४१ (१) विदा मघवन् विदा गातुमनुशंसिषो दिशः ।
(२) शिक्षा शचीनां पते । पूर्वीणां पुरूवसो ॥ ॥ १ ॥

६४२ आभिष्ट्वमभिष्टिभिः । (३) स्वाऽ३र्न्नांशुः ।
प्रचेतन प्रचेतये-(४)- न्द्र द्युम्नाय न इषे । ॥ २ ॥

६४३ एवा हि शक्रो । (५) राये वाजाय वज्रिवः ।
शविष्ठ वज्रिन्नृञ्जसे । मंहिष्ठ वज्रिन्नृञ्जसे ।
(६) आ याहि पिब मत्स्व ॥ ३ ॥

६४४ (१) विदा राये सुवीर्यं भवो वाजानां पतिर्वशाँ अनु ।
(२) मंहिष्ठ वज्रिन्नृञ्जसे । यः शविष्ठः शूराणाम् ॥ ४ ॥

६४५ यो मंहिष्ठो मघोनाम् । (३) अंशुर्न्न शोचिः ।
चिकित्वो अभि नो नय । (४) इन्द्रो विदे तमु स्तुहि ॥ ५ ॥

६४६ ईशे हि शक्रस् । (५) तमूतये हवामहे जेतारमपराजितम् ।
स नः स्वर्षदति द्विषः । (६) क्रतुश्छन्द ऋतं बृहत् ॥ ६ ॥

६४७ (१) इन्द्रं धनस्य सातये हवामहे जेतारमपराजितम् ।
(२) स नः स्वर्षदति द्विषः । स नः स्वर्षदति द्विषः ॥ ७ ॥

६४८ पूर्वस्य यत्ते अद्रिवो-(३)-ऽंशुर्मदाय ।
सुम्न आ धेहि नो वसो । (४) पूर्तिः शविष्ठ शस्यते ।
वशी हि शक्रो । (५) नूनं तन्नव्यं संन्यसे ॥ ८ ॥

३ १र २र ३ १ २
६४९ प्रभो जनस्य वृत्रहन् त्समर्येषु ब्रवावहै ।
२ ३ २उ ३ १ २ ३ १ २ ३ २ ३ १ २
(६) शूरो यो गोषु गच्छति सखा सुशेवो अद्वयुः ॥ ९ ॥

अथ पञ्च पुरीषपदानि ॥

३ २ १ ३ १ २ ३ १ २
६५० एवाह्येऽ३ऽ३ऽ३ व । एवा ह्यग्ने । एवाहीन्द्र ।
३ १ २र ३ १ २र
एवा हि पूषन् । एवा हि देवाः ॥१०॥

इति पञ्च पुरीषपदानि ॥

इति महानाम्न्यार्चिकः समाप्तः ॥



## पूर्वार्चिकस्य मन्त्रसंख्या

| | | | |
|---|---|---|---|
| १ आग्नेयस्य काण्डस्य | | ( १—११४ ) | ११४ |
| २ ऐन्द्रस्य | ,, | ( ११५—४६६ ) | ३५२ |
| ३ पावमानस्य | ,, | ( ४६७—५८५ ) | ११९ |
| ४ आरण्यकस्य | ,, | ( ५८६—६४० ) | ५५ |
| ४ महानाम्न्यार्चिकस्य | | ( ६४१—६५० ) | १० |
| | | सर्वयोगः | ६५० |

# सामवेदसंहिता।

## (उत्तरसंहिता) उत्तरार्चिकः।

### अथ प्रथमोऽध्यायः।

अथ प्रथमप्रपाठके प्रथमोऽर्धः ॥१॥

[ १ ]

( १-२३ ) १ असितः काश्यपो देवलो वा; २ कश्यपो मारीचः ३ शतं वैखानसाः; ४, २१ भरद्वाजो बार्हस्पत्यः; ५,७ विश्वामित्रो गाथिनः; ५ जमदग्निर्वा; ६ इरिम्बिठिः काण्वः;८ अमहीयुरांगिरसः; ९ सप्तर्षयः ( १ भरद्वाजो बार्हस्पत्यः, २ कश्यपो मारीचः; ३ गोतमो राहूगणः; ४ अत्रिर्भौमः, ५ विश्वामित्रो गाथिनः; ६ जमदग्निर्भार्गवः; ७ वसिष्ठो मैत्रावरुणिः ); १० उशना काव्यः; ११ वसिष्ठो मैत्रावरुणिः; १२ वामदेवो गौतमः; १३ नोधा गौतमः; १४ कालिः प्रागाथः; १५ मधुच्छन्दा वैश्वामित्रः; १६ गौरवीतिः शाक्त्यः, १७ अग्निश्चाक्षुषः; १८ अन्धीगुः श्यावाश्विः; १९ कविर्भार्गवः;२० शंयुर्बार्हस्पत्यः; (तृणपाणिः) २२ सोभरिः काण्वः;२३ नृमेध आङ्गिरसः॥१-३, ८-१०, १५-१९ पवमानः सोमः; ४,२०,२१ अग्निः; ५ मित्रावरुणौ; ७ इन्द्राग्नी; ६, ११-१४, २२-२३ इन्द्रः॥ १-८, १२ ( १-२ ),१५, १८ (२-३), २१ गायत्री; ९, ११,१३, १४, २० प्रगाथः= ( विषमा बृहती, समा सतो बृहती ); १० त्रिष्टुप्; १२ ( ३ ) पादनिचृत्; १६,२२ काकुभः प्रगाथः=( विषमा ककुप्, समा सतो बृहती ) १७ उष्णिक्; १८ ( १ ) अनुष्टुप्; १९ जगती; २३ ( १ ) ककुप्, (२) उष्णिक्, (३) पुर उष्णिक् ॥

(ऋग्वेदे) (सामवेदे)

६५१ उपास्मै गायता नरः पवमानायेन्दवे।
अभि देवाँ इयक्षते ॥ १ ॥ ९।११।१ ७६३

६५२ अभि ते मधुना पयोऽथर्वाणो अशिश्रयुः।
देवं देवाय देवयु ॥ २ ॥ ९।११।२

६५३ स नः पवस्व शं गवे शं जनाय शमर्वते।
शं राजन्नोषधीभ्यः ॥ ३ ॥ ॥१(ती)॥ ९।११।३

६५४ दविद्युतत्या रुचा परिष्टोभन्त्या कृपा।
सोमाः शुक्रा गवाशिरः ॥ १ ॥ ९.६४।२८

६५५ हिन्वानो हेतृभिर्हित आ वाजं वाज्यक्रमीत्।
सीदन्तो वनुषो यथा ॥ २ ॥ ९।६४ २९

(ऋग्वेदे) (सामवेदे)

६५६ ऋधक्सोम स्वस्तये संजग्मानो दिवा कवे।
पवस्व सूर्यो दृशे ॥ ३ ॥ ॥२ (यि)॥ ९।६४।३०

६५७ पवमानस्य ते कवे वाजिंत्सर्गा असृक्षत।
अर्वन्तो न श्रवस्यवः ॥ १ ॥ ९।६६।१०

६५८ अच्छा कोशं मधुश्चुतमसृग्रं वारे अव्यये।
अवावशन्त धीतयः ॥ २ ॥ ९।६६।११

६५९ अच्छा समुद्रमिन्दवोऽस्तं गावो न धेनवः।
अग्मन्नृतस्य योनिमा ॥ ३ ॥ ॥३ (कौ)॥ ९।६६।१२

॥ इति प्रथमः खण्डः ॥१॥

६६० अग्न आ याहि वीतये गृणानो हव्यदातये।
नि होता सत्सि बर्हिषि ॥ १ ॥ ६।१६।१० १

६६१ तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि।
बृहच्छोचा यविष्ठ्य ॥ २ ॥ ६।१६।११

६६२ स नः पृथु श्रवाय्यमच्छा देव विवाससि।
बृहदग्ने सुवीर्यम् ॥ ३ ॥ ॥ ४ ॥ ६।१६।१२

६६३ आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्।
मध्वा रजांसि सुक्रतू ॥ १ ॥ ३।६२।१६ २२०

६६४ उरुशंसा नमोवृधा मह्ना दक्षस्य राजथः।
द्राघिष्ठाभिः शुचिव्रता ॥ २ ॥ ३।६२।१७

६६५ गृणाना जमदग्निना योनावृतस्य सीदतम्।
पातं सोममृतावृधा ॥ ३ ॥ ॥ ५ (यि)॥ ३।६२।१८

६६६ आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम्।
एदं बर्हिः सदो मम ॥ १ ॥ ८।१७।१ १९१

६६७ आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना । (ऋग्वेदे) (सामवेदे)
उप ब्रह्माणि नः शृणु ॥ २ ॥ ८।१७।२
६६८ ब्रह्माणस्त्वा युजा वयं सोमपामिन्द्र सोमिनः ।
सुतावन्तो हवामहे ॥ ३ ॥ ॥६(क्ौ)॥ ८।१७।३

६६९ इन्द्राग्नी आ गतं सुतं गीर्भिर्नभो वरेण्यम् ।
अस्य पातं धियेषिता ॥ १ ॥ ३।१२।१
६७० इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः ।
अया पातमिमं सुतम् ॥ २ ॥ ३।१२।२
६७१ इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे ।
ता सोमस्येह तृम्पताम् ॥ ३ ॥ ॥७(ता)॥ ३।१२।३

॥इति द्वितीयः खण्डः॥२॥

६७२ उच्चा ते जातमन्धसो दिवि सद्भूम्या ददे ।
उग्रं शर्म महि श्रवः ॥ १ ॥ ९।६१।१० ४६७
६७३ स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः ।
वरिवोवित्परि स्रव ॥ २ ॥ ९।६१।१२ ५९२
६७४ एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम् ।
सिषासन्तो वनामहे ॥ ३ ॥ ॥८(ठी)॥ ९।६१।११ ५९३

६७५ पुनानः सोम धारयापो वसानो अर्षसि ।
आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥ १ ॥ ९।१०७।४ ५११
६७६ दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नं सधस्थमासदत् ।
आपृच्छ्यं धरुणं वाज्यर्षसि नृभिर्धौतो विचक्षणः ॥२॥९(लु)॥ ९।१०७।५

६७७ प्र तु द्रव परि कोशं नि षीद नृभिः पुनानो अभि वाजमर्ष ।
अश्वं न त्वा वाजिनं मर्जयन्तोऽच्छा बर्ही रशनाभिर्नयन्ति ॥१॥ ९।८७।१ ५२३

६७८ स्वायुधः पवते देव इन्दुरशस्तिहा वृजना रक्षमाणः । (ऋग्वेदे)(सामवेदे)
पिता देवानां जनिता सुदक्षो विष्टम्भो दिवो धरुणः पृथिव्याः॥२॥ ९।८७।२
६७९ ऋषिर्विप्रः पुरएता जनानामृभुर्धीर उशना काव्येन ।
स चिद्विवेद निहितं यदासामपीच्यां३ गुह्यं नाम गोनाम्॥३॥१०(हु)॥ ९।८७।३

॥ इति तृतीयः खण्डः ॥ ३ ॥

६८० अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ १ ॥ ७।३२।२२ २३३
६८१ न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे॥२॥११(यी)॥७।३२।२३
६८२ कया नश्चित्र आ भुवदूती सदावृधः सखा ।
कया शचिष्ठया वृता ॥ १ ॥ ४।३१।१ १६९
६८३ कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः ।
दृढा चिदारुजे वसु ॥ २ ॥ ४।३१।२
६८४ अभी षु णः सखीनामविता जरितॄणाम् ।
शतं भवास्यूतये ॥ ३ ॥ ॥१२(टा)॥४।३१।३
६८५ तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः ।
अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥ १ ॥ ८।८८।१ २३६
६८६ द्युक्षं सुदानुं तविषीभिरावृतं गिरिं न पुरुभोजसम् ।
क्षुमन्तं वाजं शतिनं सहस्रिणं मक्षू गोमन्तमीमहे॥२॥१३(ही)॥८।८८।२
६८७ तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऊतये ।
बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम् ॥ १ ॥ ८।६६।१ २३७
६८८ न यं दुध्रा वरन्ते न स्थिरा मुरो मदेषु शिप्रमन्धसः ।
य आदृत्या शशमानाय सुन्वते दाता जरित्र उक्थ्यम्॥२॥१४(जु)॥८।६६।२

॥ इति चतुर्थः खण्डः ॥४॥

(ऋग्वेदे) (सामवेदे)

६८९ स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।
इन्द्राय पातवे सुतः ॥ १ ॥ ९।१।१ ४६८

६९० रक्षोहा विश्वचर्षणिरभि योनिमयोहते ।
द्रोणे सधस्थमासदत् ॥ २ ॥ ९।१।२

६९१ वरिवोधातमो भुवो मंहिष्ठो वृत्रहन्तमः ।
पर्षि राधो मघोनाम् ॥ ३ ॥ ॥१५(पौ)॥ ९।१।३

६९२ पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः ।
महि द्युक्षतमो मदः ॥ १ ॥ ॥ ९।१०८।१ ५७८

६९३ यस्य ते पीत्वा वृषभो वृषायतेऽस्य पीत्वा स्वर्विदः ।
स सुप्रकेतो अभ्यक्रमीदिषोऽच्छा वाजं नैतशः ॥२॥ ॥१६(प)॥ ९।१०८।२

६९४ इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः ।
श्रुष्टे जातास इन्दवः स्वर्विदः ॥ १ ॥ ९।१०६।१ ५६६

६९५ अयं भराय सानसिरिन्द्राय पवते सुतः ।
सोमो जैत्रस्य चेतति यथा विदे ॥ २ ॥ ९।१०६।२

६९६ अस्येदिन्द्रो मदेष्वा ग्राभं गृभ्णाति सानसिम् ।
वज्रं च वृषणं भरत्समप्सुजित् ॥ ३ ॥ ॥१७(क्रि)॥ ९।१०६।३

६९७ पुरोजिती वो अन्धसः सुताय मादयित्नवे ।
अप श्वानं श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥ १ ॥ ९।१०१।१ ५४५

६९८ यो धारया पावकया परिप्रस्यन्दते सुतः ।
इन्दुरश्वो न कृत्व्यः ॥ २ ॥ ९।१०१।२

६९९ तं दुरोषमभी नरः सोमं विश्वाच्या धिया ।
यज्ञाय सन्त्वद्रयः ॥ ३ ॥ ॥१८(यि)॥ ९।१०१।३

७०० अभि प्रियाणि पवते चनोहितो नामानि यह्वो अधि येषु वर्धते ।
आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वञ्चमरुहद्विचक्षणः ॥ १ ॥ ९।७५।१ ५५४

७०१ ऋतस्य जिह्वा पवते मधु प्रियं वक्ता पतिर्धियो अस्या अदाभ्यः। (ऋग्वेदे)(सामवेदे)
दधाति पुत्रः पित्रोरपीच्यां३नाम तृतीयमधि रोचनं दिवः ॥२॥९।७५।२
७०२ अव द्युतानः कलशाँ अचिक्रदन्नृभिर्येमाणः कोश आ हिरण्यये।
अभी ऋतस्य दोहना अनूषताधि त्रिपृष्ठ उषसो वि राजसि ॥३॥१९(दि)॥ ९।७५।३

॥ इति पञ्चमः खण्डः ॥५॥

७०३ यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे।
प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम् ॥ १ ॥ ६।४८।१ ३५
७०४ ऊर्जो नपातं स हिनायमस्मयुर्दाशेम हव्यदातये।
भुवद्वाजेष्वविता भुवद्वृध उत त्राता तनूनाम् ॥२॥ ॥२०(यु)॥ ६।४८।२

७०५ एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः।
एभिर्वर्धास इन्दुभिः ॥ १ ॥ ६।१६।१६ ७
७०६ यत्र क्व च ते मनो दक्षं दधस उत्तरम्।
तत्र योनिं कृणवसे ॥ २ ॥ ६।१६।१७
७०७ न हि ते पूर्तमक्षिपद्भुवन्नेमानां पते।
अथा दुवो वनवसे ॥ ३ ॥ ॥२१(यी)॥ ६।१६।१८
७०८ वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः।
वज्रिं चित्रं हवामहे ॥ १ ॥ ८।२१।१ ४०८
७०९ उप त्वा कर्मन्नूतये स नो युवोग्रश्चक्राम यो धृषत्।
त्वामिध्यवितारं ववृमहे सखाय इन्द्र सानसिम् ॥२॥२२(च)॥ ८।२१।२

७१० अधा हीन्द्र गिर्वण उप त्वा काम ईमहे ससृग्महे।
उदेव ग्मन्त उदभिः ॥ १ ॥ ८।९८।७ ४०६
७११ वार्ण त्वा यव्याभिर्वर्धन्ति शूर ब्रह्माणि।
वावृध्वांसं चिदद्रिवो दिवेदिवे ॥ २ ॥ ८।९८।८

७१२ युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे वचोयुजा । (ऋग्वेदे) (सामवेदे)
इन्द्रवाहा स्वर्विदा ॥३॥ ॥२३(यि)॥ ८।९८।९

॥ इति षष्ठः खण्डः ॥६॥

इति प्रथमप्रपाठके प्रथमोऽर्धः ॥१॥ इति प्रथमोऽध्यायः ॥१॥

## अथ द्वितीयोऽध्यायः ।

[ २ ]

अथ प्रथमप्रपाठके द्वितीयोऽर्धः ॥१॥

( १-२२ ) १, ४ श्रुतकक्षः सुकक्षो वा आङ्गिरसः; २,८, १३-१५ वसिष्ठो मैत्रावरुणिः ३ मेधातिथिः; काण्वः प्रियमेधश्चाङ्गिरसः; ५ इरिम्बिठिः काण्वः; ६ कुसीदी काण्वः; ७ त्रिशोकः काण्व ९ विश्वामित्रो गाथिनः; १० मधुच्छन्दा वैश्वामित्रः; ११ शुनःशेप आजीगर्तिः; १२ नारदः काण्वः; १६ अवत्सारः काश्यपः, १७ ( १ ) शुनःशेप आजीगर्तिः स देवरातः कृत्रिमो वैश्वामित्रः; १७ ( २—३ ) मेध्यातिथिः काण्वः; १८ ( १, ३ ) असितः काश्यपो देवलो वा; १८ ( २ ) अमहीयुराङ्गिरसः; १९ त्रित आप्त्यः; २० सप्तर्षयः ( १ भरद्वाजो बार्हस्पत्यः, २ कश्यपो मारीचः, ३ गोतमो राहूगणः, ४ अत्रिर्भौमः, ५ विश्वामित्रो गाथिनः, ६ जमदग्निर्भार्गवः, वसिष्ठो मैत्रावरुणिः ); २१ श्यावाश्व आत्रेयः; २२ ( १-२ ) अग्निश्चाक्षुषः; २२ ( ३ ) प्रजापतिर्वैश्वामित्रो वाच्यो वा ॥ १—१२ इन्द्रः; १३ अग्निः; १४ उषाः; १५ अश्विनौ; १६-२२ पवमानः सोमः ॥ १(२-३)—११; १६-१९, २१; गायत्री, १२, २२ (१-२) उष्णिक्; १३-१५,२० प्रगाथः= ( विषमा बृहती, समा सतोबृहती ); १ (१), २२ ( ३ ) अनुष्टुप् ॥

७१३ पान्तमा वो अन्धस इन्द्रमभि प्र गायत ।
विश्वासाहं शतक्रतुं मंहिष्ठं चर्षणीनाम् ॥ १ ॥ ८।९२।१ १५५

७१४ पुरुहूतं पुरुष्टुतं गाथान्याँ३ सनश्रुतम् ।
इन्द्र इति ब्रवीतन ॥ २ ॥ ८।९२।२

७१५ इन्द्र इन्नो महोनां दाता वाजानां नृतुः ।
महाँ अभिज्ञ्वा यमत् ॥ ३ ॥ ॥१(वा)॥ ८।९२।३

७१६ प्र व इन्द्राय मादनं हर्यश्वाय गायत ।
सखायः सोमपाव्ने ॥ १ ॥ ७।३१।१ १५६

७१७ शंसेदुक्थं सुदानव उत द्युक्षं यथा नरः ।
चकृमा सत्यराधसे ॥ २ ॥ ७।३१।२

(ऋग्वेदे) (सामवेदे)

७१८ त्वं न इन्द्र वाजयुस्त्वं गव्युः शतक्रतो ।
त्वं हिरण्ययुर्वसो ॥ ३ ॥ ॥२(गौ)॥ ७।३१।३

७१९ वयमु त्वा तदिदर्था इन्द्र त्वायन्तः सखायः ।
कण्वा उक्थेभिर्जरन्ते ॥ १ ॥ ८।२।१६ १५७

७२० न घेमन्यदा पपन वज्रिन्नपसो नविष्टौ ।
तवेदु स्तोमैश्चिकेत ॥ २ ॥ ८।२।१७

७२१ इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति ।
यन्ति प्रमादमतन्द्राः ॥ ३ ॥ ॥३(पा)॥ ८।२।१८

७२२ इन्द्राय मद्वने सुतं परि ष्टोभन्तु नो गिरः ।
अर्कमर्चन्तु कारवः ॥ १ ॥ ८।९२।१९ १५८

७२३ यस्मिन्विश्वा अधि श्रियो रणन्ति सप्त संसदः ।
इन्द्रं सुते हवामहे ॥ २ ॥ ८।९२।२०

७२४ त्रिकद्रुकेषु चेतनं देवासो यज्ञमत्नत ।
तमिद्वर्धन्तु नो गिरः ॥ ३ ॥ ॥४(ला)॥ ८।९२।२१

॥ इति प्रथमः खण्डः ॥१॥

७२५ अयं त इन्द्र सोमो निपूतो अधि बर्हिषि ।
एहीमस्य द्रवा पिब ॥ १ ॥ ८।१७।११ १५९

७२६ शाचिगो शाचिपूजनायं रणाय ते सुतः ।
आखण्डल प्र हूयसे ॥ २ ॥ ८।१७।१२

७२७ यस्ते शृङ्गवृषो णपात्प्रणपात्कुण्डपाय्यः ।
न्यस्मिं दध्र आ मनः ॥ ३ ॥ ॥५(दि)॥ ८।१७।१३

७२८ आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं सं गृभाय ।
महाहस्ती दक्षिणेन ॥ १ ॥ ८।८१।१ १६७

७२९ विद्मा हि त्वा तुविकूर्मिं तुविदेष्णं तुवीमघम् । (ऋग्वेदे) (सामवेदे)
तुविमात्रमवोभिः ॥ २ ॥ ८।८१।२

७३० न हि त्वा शूर देवा न मर्तासो दित्सन्तम् ।
भीमं न गां वारयन्ते ॥ ३ ॥ ॥ ६ (के) ॥ ८।८१।३

७३१ अभि त्वा वृषभा सुते सुतं सृजामि पीतये ।
तृम्पा व्यश्नुही मदम् ॥ १ ॥ ८।४५।२२ १६१

७३२ मा त्वा मूरा अविष्यवो मोपहस्वान आ दभन् ।
मा कीं ब्रह्मद्विषं वनः ॥ २ ॥ ८।४५।२३

७३३ इह त्वा गोपरीणसं महे मन्दन्तु राधसे ।
सरो गौरो यथा पिब ॥ ३ ॥ ॥ ७ (या) ॥ ८।४५।२४

७३४ इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम् ।
अनाभयिन्ररिमा ते ॥ १ ॥ ८।२।१ १२४

७३५ नृभिर्धौतः सुतो अश्नैरव्या वारैः परिपूतः ।
अश्वो न निक्तो नदीषु ॥ २ ॥ ८।२।२

७३६ तं ते यवं यथा गोभिः स्वादुमकर्म श्रीणन्तः ।
इन्द्र त्वास्मिन्त्सधमादे ॥ ३ ॥ ॥ ८(थौ)॥ ८।२।३

॥ इति द्वितीयः खण्डः ॥२॥

७३७ इदं ह्यन्वोजसा सुतं राधानां पते ।
पिबा त्वाऽस्य गिर्वणः ॥ १ ॥ ३।५१।१० १६५

७३८ यस्ते अनु स्वधामसत्सुते नि यच्छ तन्वम् ।
स त्वा ममत्तु सोम्य ॥ २ ॥ ३।५१।११

७३९ प्र ते अश्नोतु कुक्ष्योः प्रेन्द्र ब्रह्मणा शिरः ।
प्र बाहू शूर राधसा ॥ ३ ॥ ॥ ९ (पी)॥ ३।५१।१२

| | | (ऋग्वेदे) | (सामवेदे) |
|---|---|---|---|
| ७४० | आ त्वेता नि षीदतेन्द्रमभि प्र गायत । | | |
| | सखाय स्तोमवाहसः ॥ १ ॥ | १।५।१ | १६४ |
| ७४१ | पुरूतमं पुरूणामीशानं वार्याणाम् । | | |
| | इन्द्रं सोमे सचा सुते ॥ २ ॥ | १।५।२ | |
| ७४२ | स घा नो योग आ भुवत्स राये स पुरन्ध्या । | | |
| | गमद्वाजेभिरा स नः ॥ ३ ॥ ॥ १० (टी) ॥ | १।५।३ | |
| ७४३ | योगेयोगे तवस्तरं वाजेवाजे हवामहे । | | |
| | सखाय इन्द्रमूतये ॥ १ ॥ | १।३०।७ | १६३ |
| ७४४ | अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरम् । | | |
| | यं ते पूर्वं पिता हुवे ॥ २ ॥ | १।३०।९ | |
| ७४५ | आ घा गमद्यदि श्रवत्सहस्रिणीभिरूतिभिः । | | |
| | वाजेभिरुप नो हवम् ॥ ३ ॥ ॥ ११ (ला) ॥ | १।३०।८ | |
| ७४६ | इन्द्र सुतेषु सोमेषु क्रतुं पुनीष उक्थ्यम् । | | |
| | विदे वृधस्य दक्षस्य महाँ हि षः ॥ १ ॥ | ८।१३।१ | ३८१ |
| ७४७ | स प्रथमे व्योमनि देवानां सदने वृधः । | | |
| | सुपारः सुश्रवस्तमः समप्सुजित् ॥ २ ॥ | ८।१३।२ | |
| ७४८ | तमु हुवे वाजसातय इन्द्रं भराय शुष्मिणम् । | | |
| | भवा नः सुम्ने अन्तमः सखा वृधे ॥ ३ ॥ ॥ १२ (वा) ॥ | ८।१३।३ | |

॥ इति तृतीयः खण्डः ॥३॥

| | | | |
|---|---|---|---|
| ७४९ | एना वो अग्निं नमसोर्जो नपातमा हुवे । | | |
| | प्रियं चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतम् ॥ १ ॥ | ७।१६।१ | ४५ |
| ७५० | स योजते अरुषा विश्वभोजसा स दुद्रवत्स्वाहुतः । | | |
| | सुब्रह्मा यज्ञः सुशमी वसूनां देवं राधो जनानाम् ॥२॥ ॥१३(तु)॥ | ७।१६।२ | |

७५१ प्रत्यु अदर्श्यायत्यू३च्छन्ती दुहिता दिवः । (ऋग्वेदे) (सामवेदे)
अपो मही वृणुते चक्षुषा तमो ज्योतिष्कृणोति सूनरी ॥१॥ ७।८१।१ ३०३
७५२ उदुस्रियाः सृजते सूर्यः सचा उद्यन्नक्षत्रमर्चिवत् ।
तवेदुषो व्युषि सूर्यस्य च सं भक्तेन गमेमहि ॥ २ ॥ ॥१४ (वा)॥ ७।८१।२

७५३ इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना ।
अयं वामह्वेऽवसे शचीवसू विशंविशं हि गच्छथः ॥ १ ॥ ७।७४।१ ३०४
७५४ युवं चित्रं ददथुर्भोजनं नरा चोदेथां सूनृतावते ।
अर्वाग्रथं समनसा नि यच्छतं पिबतं सोम्यं मधु ॥२॥ ॥१५(चा)॥ ७।७४।२

॥ इति चतुर्थः खण्डः ॥४॥

७५५ अस्य प्रत्नामनु द्युतं शुक्रं दुदुह्रे अह्रयः ।
पयः सहस्रसामृषिम् ॥ १ ॥ ९।५४।१
७५६ अयं सूर्य इवोपदृगयं सरांसि धावति ।
सप्त प्रवत आ दिवम् ॥ २ ॥ ९।५४।२
७५७ अयं विश्वानि तिष्ठति पुनानो भुवनोपरि ।
सोमो देवो न सूर्यः ॥ ३ ॥ ॥१६(ते)॥ ९।५४।३

७५८ एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः ।
हरिः पवित्रे अर्षति ॥ १ ॥ ९।३।९
७५९ एष प्रत्नेन मन्मना देवो देवेभ्यस्परि ।
कविर्विप्रेण वावृधे ॥ २ ॥ ९।४२।२
७६० दुहानः प्रत्नमित्पयः पवित्रे परि षिच्यसे ।
क्रन्दं देवाँ अजीजनः ॥ ४ ॥ ॥ १७(हा)॥ ९।४२।४

७६१ उप शिक्षापतस्थुषो भियसमा धेहि शत्रवे ।
पवमान विदा रयिम् ॥ १ ॥ ९।१९।६

(ऋग्वेदे) (सामवेदे)

७६२ उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम्।
इन्दुं देवा अयासिषुः ॥ २ ॥ ९।६१।१३ ४८७; १३३५

७६३ उपास्मै गायता नरः पवमानायेन्दवे ।
अभि देवाँ इयक्षते ॥ ३ ॥ ॥१८(वौ)॥ ९।११।१ ६५१

॥ इति पञ्चमः खण्डः ॥५॥

७६४ प्र सोमासो विपश्चितोऽपो नयन्त ऊर्मयः ।
वनानि महिषा इव ॥ १ ॥ ९।३३।१ ४७८

७६५ अभि द्रोणानि बभ्रवः शुक्रा ऋतस्य धारया ।
वाजं गोमन्तमक्षरन् ॥ २ ॥ ९।३३।२

७६६ सुता इन्द्राय वायवे वरुणाय मरुद्भ्यः ।
सोमा अर्षन्तु विष्णवे ॥ ३ ॥ ॥१९(वि)॥ ९।३३।३

७६७ प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा ।
अंशोः पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतम् ॥१॥ ९।१०७।१२ ५१४

७६८ आ हर्यतो अर्जुनो अत्के अव्यत प्रियः सूनुर्न मर्ज्यः ।
तमीं हिन्वन्त्यपसो यथा रथं नदीष्वा गभस्त्योः ॥२॥२०(रू)॥ ९।१०७।१३

७६९ प्र सोमासो मदच्युतः श्रवसे नो मघोनाम् ।
सुता विदथे अक्रमुः ॥ १ ॥ ९।३२।१ ४७७

७७० आर्दीं हंसो यथा गणं विश्वस्यावीवशन्मतिम् ।
अत्यो न गोभिरज्यते ॥ २ ॥ ९।३२।३

७७१ आर्दीं त्रितस्य योषणो हरिं हिन्वन्त्यद्रिभिः ।
इन्दुमिन्द्राय पीतये ॥ ३ ॥ ॥२१(ली)॥ ९।३२।२

७७२ अया पवस्व देवयु रेभन्पवित्रं पर्येषि विश्वतः ।
मधोर्धारा असृक्षत ॥ १ ॥ ९।१०६।१४

(ऋग्वेदे) (सामवेदे)

७७३ पवते हर्यतो हरिरति ह्वरांसि रंह्या ।
अभ्यर्ष स्तोतृभ्यो वीरवद्यशः ॥ २ ॥ ९।१०६।१३ ५७६

७७४ प्र सुन्वानायान्धसो मर्तो न वष्ट तद्वचः ।
अप श्वानमराधसं हता मखं न भृगवः ॥ ३ ॥ ॥२२(लि)॥ ९।१०१।१३; ५५३; १३८६

॥ इति षष्ठः खण्डः ॥६॥

॥ इति प्रथमप्रपाठके द्वितीयोऽर्धः प्रथमप्रपाठकश्च समाप्तः ॥ १ ॥

॥ इति द्वितीयोऽध्यायः ॥ २ ॥

# अथ तृतीयोऽध्यायः ।

[ १ ]

अथ द्वितीयप्रपाठके प्रथमोऽर्धः ॥ २ ॥

(१-१९) १ जमदग्निर्भार्गवः; २, ५,१५ अमहीयुराङ्गिरसः; ३ कश्यपो मारीचः; ४,१० भृगुर्वारुणिर्जमदग्निर्भार्गवो वा; ६-७ मेधातिथिः काण्वः; ८ मधुच्छन्दा वैश्वामित्रः; ९ वसिष्ठो मैत्रावरुणिः; ११ उपमन्युर्वासिष्ठः; १२ शंयुर्बार्हस्पत्यः; १३ वालखिल्याः, प्रस्कण्वः काण्वः; १४ नृमेध आङ्गिरसः; १६ नहुषो मानवः; १७ ( १-२ ) सिकता निवावरी; १७ ( ३ ) पृश्नियोऽजाः; १८ श्रुतकक्षः सुकक्षो वा आङ्गिरसः; १९ जेता माधुच्छन्दसः ॥ १-५, १०-११, १५-१७ पवमानः सोमः; ६ अग्निः; ७ मित्रावरुणौ; ८, १२-१४, १८-१९ इन्द्रः; ९ इन्द्राग्नी ॥ १-१०, १५, १८ गायत्री; ११ त्रिष्टुप्; १२-१४ प्रगाथः= ( विषमा बृहती, समा सतोबृहती ); १६, १९ अनुष्टुप्; १७ जगती ॥

७७५ पवस्व वाचो अग्रियः सोम चित्राभिरूतिभिः
अभि विश्वानि काव्या ॥ १ ॥ ९।६२।२५

७७६ त्वं समुद्रिया अपोऽग्रियो वाच ईरयन् ।
पवस्व विश्वचर्षणे ॥ २ ॥ ९।६२।२६

७७७ तुभ्येमा भुवना कवे महिम्ने सोम तस्थिरे ।
तुभ्यं धावन्ति धेनवः ॥ ३ ॥ ॥ १ (यी)॥ ९।६२।२७

| | (ऋग्वेदे) | (सामवेदे) |
|---|---|---|
| ७७८ पवस्वेन्दो वृषा सुतः कृधी नो यशसो जने । | | |
| विश्वा अप द्विषो जहि ॥ १ ॥ | ९।६१।२८ | |
| ७७९ यस्य ते सख्ये वयं सासह्याम पृतन्यतः । | | |
| तवेन्दो द्युम्न उत्तमे ॥ २ ॥ | ९।६१।२९ | |
| ७८० या ते भीमान्यायुधा तिग्मानि सन्ति धूर्वणे । | | |
| रक्षा समस्य नो निदः ॥ ३ ॥ ॥२ (ह)॥ | ९।६१।३० | |
| ७८१ वृषा सोम द्युमाँ असि वृषा देव वृषव्रतः । | | |
| वृषा धर्माणि दध्रिषे ॥ १ ॥ | ९।६४।१ | ५०४ |
| ७८२ वृष्णस्ते वृष्ण्यं शवो वृषा वनं वृषा सुतः । | | |
| स त्वं वृषन्वृषेदसि ॥ २ ॥ | ९।६४।२ | |
| ७८३ अश्वो न चक्रदो वृषा सं गा इन्दो समर्वतः । | | |
| वि नो राये दुरो वृधि ॥ ३ ॥ ॥ ३(लु)॥ | ९।६४।३ | |
| ७८४ वृषा ह्यसि भानुना द्युमन्तं त्वा हवामहे । | | |
| पवमान स्वर्दृशम् ॥ १ ॥ | ९।६५।४ | ४८० |
| ७८५ यदद्भिः परिषिच्यसे मर्मृज्यमान आयुभिः । | | |
| द्रोणे सधस्थमश्नुषे ॥ २ ॥ | ९।६५।६ | |
| ७८६ आ पवस्व सुवीर्यं मन्दमानः स्वायुध । | | |
| इहो ष्विन्दवा गहि ॥ ३ ॥ ॥४ (यौ)॥ | ९।६५।५ | |
| ७८७ पवमानस्य ते वयं पवित्रमभ्युन्दतः । | | |
| सखित्वमा वृणीमहे ॥ ४ ॥ | ९।६१।४ | |
| ७८८ ये ते पवित्रमूर्मयोऽभिक्षरन्ति धारया । | | |
| तेभिर्नः सोम मृडय ॥ ४ ॥ | ९।६१।५ | |

| | | (ऋग्वेदे) | (सामवेदे) |
|---|---|---|---|
| ७८९ स नः पुनान आ भर रयिं वीरवतीमिषम् । | | | |
| ईशानः सोम विश्वतः ॥ ५ ॥ | ॥ ५(ला)॥ | ९।६१।६ | |

इति प्रथमः खण्डः ॥१॥

| | | | |
|---|---|---|---|
| ७९० अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । | | | |
| अस्य यज्ञस्य सुक्रतुम् ॥ १ ॥ | | १।१२।१ | ३ |
| ७९१ अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् । | | | |
| हव्यवाहं पुरुप्रियम् ॥ २ ॥ | | १।१२।२ | |
| ७९२ अग्ने देवाँ इहा वह जज्ञानो वृक्तबर्हिषे । | | | |
| असि होता न ईड्यः ॥ ३ ॥ | ॥ ६(यौ)॥ | १।१२।३ | |
| ७९३ मित्रं वयं हवामहे वरुणं सोमपीतये । | | | |
| या जाता पूतदक्षसा ॥ १ ॥ | | १।२३।४ | |
| ७९४ ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती । | | | |
| ता मित्रावरुणा हुवे ॥ २ ॥ | | १।२३।५ | |
| ७९५ वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः । | | | |
| करतां नः सुराधसः ॥ ३ ॥ | ॥ ७(वा)॥ | १।२३।६ | |
| ७९६ इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः । | | | |
| इन्द्रं वाणीरनूषत ॥ १ ॥ | | १।७।१ | १९८ |
| ७९७ इन्द्र इद्धर्योः सचा सम्मिश्ल आ वचोयुजा । | | | |
| इन्द्रो वज्री हिरण्ययः ॥ २ ॥ | | १।७।२ | ५९७ |
| ७९८ इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च । | | | |
| उग्र उग्राभिरूतिभिः ॥ ३ ॥ | | १।७।४ | ५९८ |
| ७९९ इन्द्रो दीर्घाय चक्षस आ सूर्यं रोहयद्दिवि । | | | |
| वि गोभिरद्रिमैरयत् ॥ ४ ॥ | ॥ ८(खा)॥ | १।७।३ | |

८०० इन्द्रे अग्ना नमो बृहत्सुवृक्तिमेरयामहे । (ऋग्वेदे) (सामवेदे)
धिया धेना अवस्यवः ॥ १ ॥ ७।९४।४
८०१ ता हि शश्वन्त ईडत इत्था विप्रास ऊतये ।
सबाधो वाजसातये ॥ २ ॥ ७।९४।५
८०२ ता वां गीर्भिर्विपन्युवः प्रयस्वन्तो हवामहे ।
मेधसाता सनिष्यवः ॥ ३ ॥ ॥ ९(हु)॥ ७।९४।६

॥इति द्वितीयः खण्डः॥२॥

८०३ वृषा पवस्व धारया मरुत्वते च मत्सरः ।
विश्वा दधान ओजसा ॥ १ ॥ ९।६५।१० ४६९
८०४ तं त्वा धर्तारमोण्यो३ः पवमान स्वर्दृशम् ।
हिन्वे वाजेषु वाजिनम् ॥ २ ॥ ९।६५।११
८०५ अया चित्तो विपानया हरिः पवस्व धारया ।
युजं वाजेषु चोदय ॥ ३ ॥ ॥१०(ट)॥ ९।६५।१२
८०६ वृषा शोणो अभिकनिक्रदद्गा नदयन्नेषि पृथिवीमुत द्याम् ।
इन्द्रस्येव वग्नुरा शृण्व आजौ प्रचोदयन्नर्षसि वाचमेमाम् ॥ १ ॥ ९।९७।१३
८०७ रसाय्यः पयसा पिन्वमान ईरयन्नेषि मधुमन्तमंशुम् ।
पवमान सन्तनिमेषि कृण्वन्निन्द्राय सोम परिषिच्यमानः ॥ २ ॥ ९।९७।१४
८०८ एवा पवस्व मदिरो मदायोदग्राभस्य नमयन्वधस्नुम् ।
परि वर्णं भरमाणो रुशन्तं गव्युर्नो अर्ष परि सोम सिक्तः ॥३॥११(रि)॥९।९७।१५

॥ इति तृतीयः खण्डः ॥ ३ ॥

८०९ त्वामिद्धि हवामहे सातौ वाजस्य कारवः ।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥ १ ॥ ६।४६।१ २३४

८१० स त्वं नश्चित्र वज्रहस्त धृष्णुया मह स्तवानो अद्रिवः । (ऋग्वेदे) (सामवेदे)
गामश्वं रथ्यमिन्द्र सं किर सत्रा वाजं न जिग्युषे ॥२॥ ॥१२(फु)॥ ८।४६।२
(धा० १० । उ० २ । स्व० ५)

८११ अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे ।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ॥ १ ॥ ८।४९।१ २३५

८१२ शतानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे ।
गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसः॥२॥१३(हि)॥ ८।४९।२
(धा० १६ । उ० ना० । स्व० ३)

८१३ त्वामिदा ह्यो नरोऽपीप्यन्वज्रिन् भूर्णयः ।
स इन्द्र स्तोमवाहस इह श्रुध्युप स्वसरमा गहि ॥ १ ॥ ८।९९।१ ३०२

८१४ मत्स्वा सुशिप्रिन्हरिवस्तमीमहे त्वया भूषन्ति वेधसः ।
तव श्रवांस्युपमान्युक्थ्य सुतेष्विन्द्र गिर्वणः॥२॥ ॥१४(ल)॥ ८।९९।२
(धा० १९ । उ० ना० । स्व० १)

॥ इति चतुर्थः खण्डः ॥४॥

८१५ यस्ते मदो वरेण्यस्तेना पवस्वान्धसा ।
देवावीरघशंसहा ॥ १ ॥ ९।६१।१९ ४७०

८१६ जघ्निर्वृत्रममित्रियं सस्निर्वाजं दिवेदिवे ।
गोषातिरश्वसा असि॥ २ ॥ ९।६१।२०

८१७ सम्मिश्लो अरुषो भुवः सूपस्थाभिर्न धेनुभिः ।
सीदं च्छ्येनो न योनिमा ॥३॥ ॥१५(चौ)॥ ९।६१।२१
(धा० १२ । उ० १ । स्व० नास्ति.)

८१८ अयं पूषा रयिर्भगः सोमः पुनानो अर्षति ।
पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ॥ १ ॥ ९।१०१।७ ५४६

८१९ समु प्रिया अनूषत गावो मदाय घृष्वयः ।
सोमासः कृण्वते पथः पवमानास इन्दवः ॥ २ ॥ ९।१०१।८

(ऋग्वेदे) (सामवेदे)

८२० य ओजिष्ठस्तमा भर पवमान श्रवाय्यम् ।
यः पञ्च चर्षणीरभि रयिं येन वनामहे॥३॥ ॥१६(थु)॥ ९।१०१।९

(धा० १२। उ० २। स्व० ५)

८२१ वृषा मतीनां पवते विचक्षणः सोमो अह्नां प्रतरीतोषसां दिवः ।
प्राणा सिन्धूनां कलशां अचिक्रददिन्द्रस्य हार्द्याविशन्मनीषिभिः ॥१॥
९।८६।१९ ५५९

८२२ मनीषिभिः पवते पूर्व्यः कविर्नृभिर्यतः परि कोशां असिष्यदत् ।
त्रितस्य नाम जनयन्मधु क्षरन्निन्द्रस्य वायुं सख्याय वर्धयन् ॥२॥ ९।८६।२०

८२३ अयं पुनान उषसो अरोचयदयं सिन्धुभ्यो अभवदु लोककृत् ।
अयं त्रिः सप्त दुदुहान आशिरं सोमो हृदे पवते चारु मत्सरः ॥३॥१७गी॥

(धा० ३६। उ० ३। स्व० ४॥)

॥ इति पञ्चमः खण्डः ॥५॥ ९।८६।२१

८२४ एवा ह्यसि वीरयुरेवा शूर उत स्थिरः ।
एवा ते राध्यं मनः ॥१॥
८।९२।२८ २३२

८२५ एवा रातिस्तुविमघ विश्वेभिर्धायि धातृभिः ।
अधा चिदिन्द्र नः सचा॥ २ ॥
८।९२।२९

८२६ मो षु ब्रह्मेव तन्द्रयुर्भुवो वाजानां पते ।
मत्स्वा सुतस्य गोमतः ॥३॥ (धा० १४। उ० १। स्व० ३) ॥१८(ति)॥ ८।९२।३०

८२७ इन्द्रं विश्वा अवीवृधंत्समुद्रव्यचसं गिरः ।
रथीतमं रथीनां वाजानां सत्पतिं पतिम्॥ १ ॥
१।११।१ ३४३

८२८ सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते ।
त्वामभि प्र नोनुमो जेतारमपराजितम्॥ २ ॥
१।११।२

८२९ पूर्वीरिन्द्रस्य रातयो न वि दस्यंत्यूतयः ।
यदा वाजस्य गोमत स्तोतृभ्यो मंहते मघम्॥३॥ ॥१९(री)॥ १।११।३

(धा० १८। उ० नास्ति। स्व० ४)

इति षष्ठः खण्डः ॥ ६ ॥ ॥ इति द्वितीयप्रपाठके प्रथमोऽर्धः ॥ २ ॥

॥ इति तृतीयोऽध्यायः॥३॥

# अथ चतुर्थोऽध्यायः।

[२]

अथ द्वितीयप्रपाठके द्वितीयोऽर्धः ॥ २ ॥

( १-१९ ) १ जमदग्निर्भार्गवः; २ भृगुर्वारुणिर्जमदग्निर्भार्गवो वा; ३ कविर्भार्गवः; ४ कश्यपो मारीचः; ५, मेधातिथिः काण्वः; ६-७ मधुच्छन्दा वैश्वामित्रः; ८ भरद्वाजो बार्हस्पत्यः; ९ सप्तर्षयः ( १ भरद्वाजो बार्हस्पत्यः; २ कश्यपो मारीचः; ३ गोतमो राहूगणः; ४ अत्रिर्भौमः; ५ विश्वामित्रो गाथिनः; ६ जमदग्निर्भार्गवः; ७ वसिष्ठो मैत्रावरुणिः ); १० पराशरः शाक्त्यः; ११ पुरुहन्मा आङ्गिरसः; १२ मेध्यातिथिः काण्वः १३ वसिष्ठो मैत्रावरुणिः; १४ त्रित आप्त्यः; १५ ययातिर्नाहुषः; १६ पवित्र आंगिरसः; १७ सोभरिः काण्वः; १८ गोषूक्त्यश्वसूक्तिनौ काण्वायनौ; १९ तिरश्चीरांगिरसौ ॥ १-४, ९, १०, १४-१६ पवमानः सोमः; ५, १७ अग्निः; ६ मित्रावरुणौ; ७ मरुतः, ७ ( १,३ ) इन्द्रश्च; ८ इन्द्राग्नी; ११-१३,१८-१९ इन्द्रः ॥ १-८, १४ गायत्री; ९ ( ३ ) द्विपदा विराट्; १० त्रिष्टुप्; ९ (१-२) ११, १३ प्रगाथः = ( विषमा बृहती, समा सतोबृहती ); १२ बृहती; १५, १९ अनुष्टुप्; १६ जगती, १७ प्रगाथः= ( विषमा ककुप्, समा सतोबृहती); १८ उष्णिक् ॥

(ऋग्वेदे) (सामवेदे)

८३० एत असृग्रमिन्दवस्तिरः पवित्रमाशवः।
विश्वान्यभि सौभगा ॥ १ ॥ ९।६२।१

८३१ विघ्नन्तो दुरिता पुरु सुगा तोकाय वाजिनः।
त्मना कृण्वन्तो अर्वतः ॥ २ ॥ ९।६२।२

८३२ कृण्वन्तो वरिवो गवेऽभ्यर्षन्ति सुष्टुतिम्।
इडामस्मभ्यं संयतम् ॥३॥ (धा० ७। उ० नास्ति। स्व० २) ॥१ (या)॥९।६२।३

८३३ राजा मेधाभिरीयते पवमानो मनावधि।
अन्तरिक्षेण यातवे ॥ १ ॥ ९।६५।१६

८३४ आ नः सोम सहो जुवो रूपं न वर्चसे भर।
सुष्वाणो देववीतये ॥ २ ॥ ९।६५।१८

८३५ आ न इन्दो शातग्विनं गवां पोषं स्वश्व्यम्।
वहा भगत्तिमूतये ॥३॥ (धा० १४। उ० नास्ति। स्व० २) ॥२ (ला)॥९।६५।१७

८३६ तं त्वा नृम्णानि बिभ्रतं सधस्थेषु महो दिवः । (ऋग्वेदे) (सामवेदे)
चारुं सुकृत्ययेमहे ॥ १ ॥ ९।४८।१
८३७ संवृक्तधृष्णुमुक्थ्यं महामहिव्रतं मदम् ।
शतं पुरो रुरुक्षणिम् ॥ २ ॥ ९।४८।२
८३८ अतस्त्वा रयिरभ्ययद्राजानं सुक्रतो दिवः ।
सुपर्णो अव्यथी भरत् ॥ ३ ॥ ९।४८।३
८३९ अधा हिन्वान इन्द्रियं ज्यायो महित्वमानशे ।
अभिष्टिकृद्विचर्षणिः ॥ ४ ॥ ९।४८।५
८४० विश्वस्मा इ स्वर्दृशे साधारणं रजस्तुरम् ।
गोपामृतस्य विर्भरत् ॥५॥ (धा० २६ । उ० नास्ति । स्व० ६) ॥३(हू)॥ ९।४८।४
८४१ इषे पवस्व धारया मृज्यमानो मनीषिभिः ।
इन्दो रुचाभि गा इहि ॥ १ ॥ ९।६४।१३ ५०५
८४२ पुनानो वरिवस्कृध्यूर्जं जनाय गिर्वणः ।
हरे सृजान आशिरम् ॥ २ ॥ ९।६४।१४
८४३ पुनानो देववीतय इन्द्रस्य याहि निष्कृतम् ।
द्युतानो वाजिभिर्हितः ॥३॥ (धा० १७ । उ० नास्ति । स्व० २) ॥४(या)॥ ९।६४।१५

इति प्रथमः खण्डः ॥१॥

८४४ अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा ।
हव्यवाड्जुह्वास्यः ॥ १ ॥ १।१२।६
८४५ यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्यति ।
तस्य स्म प्राविता भव ॥ २ ॥ १।१२।८
८४६ यो अग्निं देववीतये हविष्माँ आविवासति ।
तस्मै पावक मृडय ॥३॥ (धा० १३ । उ० नास्ति । स्व० ३) ॥५ (रि)॥ १।१२।९

(ऋग्वेदे) (सामवेदे)

८४७ मित्रं हुवे पूतदक्षं वरुणं च रिशादसम् ।
धियं घृताचीं साधन्ता ॥ १ ॥ १।२।७

८४८ ऋतेन मित्रावरुणावृतावृधावृतस्पृशा ।
क्रतुं बृहन्तमाशाथे ॥ २ ॥ १।२।८

८४९ कवी नो मित्रावरुणा तुविजाता उरुक्षया ।
दक्षं दधाते अपसम् ॥३॥ (धा० १० । उ० नास्ति । ख० १) ॥६(व)॥ १।२।९

८५० इन्द्रेण सं हि दृक्षसे संजग्मानो अबिभ्युषा ।
मन्दू समानवर्चसा ॥ १ ॥ १।६।७

८५१ आदह स्वधामनु पुनर्गर्भत्वमेरिरे ।
दधाना नाम यज्ञियम् ॥ २ ॥ १।६।४

८५२ वीडु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः ।
अविन्द उस्रिया अनु ॥३॥ ( धा० १४ । उ० १ । ख० ३ ) ॥७(ति)॥ १।६।५

८५३ ता हुवे ययोरिदं पप्ने विश्वं पुरा कृतम् ।
इन्द्राग्नी न मर्धतः ॥ १ ॥ ६।६०।४

८५४ उग्रा विघनिना मृध इन्द्राग्नी हवामहे ।
ता नो मृडात ईदृशे ॥ २ ॥ ६।६०।५

८५५ हथो वृत्राण्यार्या हथो दासानि सत्पती ।
हथो विश्वा अप द्विषः ॥३॥ (धा० १० । उ० १ । ख० ४) ॥८(पी)॥ ६।६०।६

॥ इति द्वितीयः खण्डः ॥२॥

८५६ अभि सोमास आयवः पवन्ते मद्यं मदम् ।
समुद्रस्याधि विष्टपे मनीषिणो मत्सरासो मदच्युतः ॥१॥ ९।१०७।१४ ५१८

८५७ तरत्समुद्रं पवमान ऊर्मिणा राजा देव ऋतं बृहत् ।
अर्षा मित्रस्य वरुणस्य धर्मणा प्र हिन्वान ऋतं बृहत् ॥२॥ ९।१०७।१५

(ऋग्वेदे)(सामवेदे)

८५८ नृभिर्येमाणो हर्यतो विचक्षणो राजा देवः समुद्र्यः ॥३॥ ९ (वु)॥ ९।१०७।१६

(धा० १५ । उ० नास्ति । स्व० ५ )

८५९ तिस्रो वाच ईरयति प्र वह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषाम् ।

गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ॥१॥ ९।९७।३४ ५२५

८६० सोमं गावो धेनवो वावशानाः सोमं विप्रा मतिभिः पृच्छमानाः ।

सोमः सुत ऋच्यते पूयमानः सोमे अर्कास्त्रिष्टुभः सं नवन्ते ॥२॥ ९।९७।३५

८६१ एवा नः सोम परिषिच्यमान आ पवस्व पूयमानः स्वस्ति ।

इन्द्रमा विश बृहता मदेन वर्धया वाचं जनया पुरंधिम्॥३॥१०(पी)॥ ९।९७।३६

( धा० ३० । उ० १ । स्व० ४ )

॥ इति तृतीयः खण्डः ॥३॥

८६२ यद्द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।

न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी ॥१॥ ८।७०।५ २५८

८६३ आ पप्राथ महिना वृष्ण्या वृषन्विश्वा शविष्ठ शवसा ।

अस्माँ अव मघवन् गोमति व्रजे वज्रिं चित्राभिरूतिभिः॥२॥११(ली)॥८।७०।६

(धा० १९ । उ० नास्ति । स्व० ४)

८६४ वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः ।

पवित्रस्य प्रस्रवणेषु वृत्रहन्परि स्तोतार आसते ॥ १ ॥ ८।३३।१ २६१

८६५ स्वरन्ति त्वा सुते नरो वसो निरेक उक्थिनः ।

कदा सुतं तृषाण ओक आ गमदिन्द्र स्वब्दीव वंसगः ॥२॥ ८।३३।२

८६६ कण्वेभिर्धृष्णवा धृषद्वाजं दर्षि सहस्रिणम् ।

पिशङ्गरूपं मघवन्विचर्षणे मक्षू गोमन्तमीमहे ॥३॥ ॥१२(छा)॥ ८।३३।३

(धा० २७ । उ० २ । स्व० २)

८६७ तरणिरित्सिषासति वाजं पुरंध्या युजा ।

आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्रुवम् ॥ १ ॥ ७।३२।२० २३८

८६८ न दुष्टुतिर्द्रविणोदेषु शस्यते न स्रेधन्तं रयिर्नशत् ।

सुशक्तिरिन्मघवं तुभ्यं मावते देष्णं यत्पार्ये दिवि ॥१३(यि)॥ ७।३२।२१

॥ इति चतुर्थः खण्डः ॥४॥ ( धा० १७ । उ० नास्ति । स्व० ३ )

८६९ तिस्रो वाच उदीरते गावो मिमन्ति धेनवः । (ऋग्वेदे) (सामवेदे)
हरिरेति कनिक्रदत् ।॥ १ ॥ ९।३३।४ ४७१

८७० अभि ब्रह्मीरनूषत यह्वीर्ऋतस्य मातरः ।
मर्जयन्तीर्दिवः शिशुम् ॥ २ ॥ ९।३३।५

८७१ रायः समुद्रांश्चतुरोऽस्मभ्यं सोम विश्वतः ।
आ पवस्व सहस्रिणः ॥ ३ ॥ (धा० १८। उ० १। स्व० २ )॥ १४(टा) ॥ ९।३३।६

८७२ सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः ।
पवित्रवन्तो अक्षरं देवान्गच्छन्तु वो मदाः ॥ १ ॥ ९।१०१।४ ५४७

८७३ इन्दुरिन्द्राय पवत इति देवासो अब्रुवन् ।
वाचस्पतिर्मखस्यते विश्वस्येशान ओजसः ॥ २ ॥ ९।१०१।५

८७४ सहस्रधारः पवते समुद्रो वाचमीङ्खयः ।
सोमस्पती रयीणां सखेन्द्रस्य दिवेदिवे ॥ ३ ॥ ॥ १५ (लि)॥ ९।१०१।६
( धा० २९। उ० नास्ति। स्व० २)

८७५ पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तः सं तदाशत ॥ १ ॥ ९।८३।१ ५६५

८७६ तपोष्पवित्रं विततं दिवस्पदेऽर्चन्तो अस्य तन्तवो व्यस्थिरन् ।
अवन्त्यस्य पवितारमाशवो दिवः पृष्ठमधि रोहन्ति तेजसा ॥२॥ ९।८३।२

८७७ अरूरुचदुषसः पृश्निरग्रिय उक्षा मिमेति भुवनेषु वाजयुः ।
मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमा दधुः ॥३॥१६(डु)॥
( धा० ३८। उ० १। स्व० ५ ) ९।८३।३ ५९६

॥ इति पञ्चमः खण्डः ॥५॥

८७८ प्र मंहिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे ।
उपस्तुतासो अग्नये ॥ १ ॥ ८।१०३।८ १०७

(ऋग्वेदे) (सामवेदे)

८७९ आ वंसते मघवा वीरवद्यशः समिद्धो द्युम्न्याहुतः ।
कुविन्नो अस्य सुमतिर्भवीयस्यच्छा वाजेभिरागमत् ॥२॥१७(या)॥ ८।१०३।९

( धा० १७ । उ० नास्ति । स्व० २ )

८८० तं ते मदं गृणीमसि वृषणं पृक्षु सासहिम् ।
उ लोककृत्नुमद्रिवो हरिश्रियम् ॥१॥ ८।१५।४ ३८३

८८१ येन ज्योतींष्यायवे मनवे च विवेदिथ ।
मन्दानो अस्य बर्हिषो वि राजसि ॥ २ ॥ ८।१५।५

८८२ तदद्या चित्त उक्थिनोऽनु ष्टुवन्ति पूर्वथा ।
वृषपत्नीरपो जया दिवेदिवे ॥ ३ ॥ ॥१८(ह)॥ ८।१५।६

( धा० २१ । उ० नास्ति । स्व० १ )

८८३ श्रुधी हवं तिरश्च्या इन्द्र यस्त्वा सपर्यति ।
सुवीर्यस्य गोमतो रायस्पूर्धि महाँ असि ॥ १ ॥ ८।९५।४ ३४६

८८४ यस्त इन्द्र नवीयसीं गिरं मन्द्रामजीजनत् ।
चिकित्विन्मनसं धियं प्रत्नामृतस्य पिप्युषीम् ॥ २ ॥ ८।९५।५

८८५ तमु ष्टवाम यं गिर इन्द्रमुक्थानि वावृधुः ।
पुरूण्यस्य पौंस्या सिषासन्तो वनामहे ॥३॥ ॥१९(फा)॥ ८।९५।६

( धा० १५ । उ० २ । स्व० २ )

॥ इति षष्ठः खण्डः ॥६॥

इति द्वितीयप्रपाठके द्वितीयोऽर्धः, द्वितीयप्रपाठकश्च समाप्तः ॥२॥

॥ इति चतुर्थोऽध्यायः ॥४॥

# अथ पञ्चमोऽध्यायः ।

[ १ ]

अथ तृतीयप्रपाठके प्रथमोऽर्धः ॥ ३ ॥

( १-२२ ) १ अकृष्टा माषाः; २ अमहीयुराङ्गिरसः; ३ मेध्यातिथिः काण्वः; ४, १२ बृहन्मतिराङ्गिरसः; ५ भृगुर्वारुणिर्जमदग्निर्भार्गवो वा; ६ सुतंभर आत्रेयः; ७ गृत्समदः शौनकः; ८, २१ गोतमो राहूगणः; ९, १३ वसिष्ठो मैत्रावरुणिः; १० दृढच्युत आगस्त्यः; ११ सप्तर्षयः ( १ भरद्वाजो बार्हस्पत्यः, २ कश्यपो मारीचः, ३ गोतमो राहूगणः; ४ अत्रिर्भौमः; ५ विश्वामित्रो गाथिनः, ६ जमदग्निर्भार्गवः, ७ वसिष्ठो मैत्रावरुणिः ) १४ रेभः काश्यपः; १५ पुरुहन्मा आङ्गिरसः; १६ असितः काश्यपो देवलो वा; १७ ( १ ) शक्तिर्वासिष्ठः, १७ ( २ ) ऊरुरांगिरसः; १८ अग्निश्चाक्षुषः; १९ प्रतर्दनो दैवोदासिः; २० प्रयोगो भार्गवः; २१ पावकोऽग्निर्बार्हस्पत्यो वा, गृहपतियविष्ठौ सहसः पुत्रावन्यतरो वा; २२, ॥ १-५, १०-१२, १६-१९ पवमानः सोमः; ६, २० अग्निः; ७ मित्रावरुणौ; ८, १३-१५, २१ इन्द्रः; ९ इन्द्राग्नी; २२ ॥ १, ६ जगती; २-५, ७-१०, १२, १६, २० गायत्री; ११, १५ प्रगाथः= ( विषमा बृहती, समा सतोबृहती ); १३ विराट्; १४ ( १ ) अति जगती, १४ ( २-३ ) उपरिष्टाद् बृहती; १७ काकुभः प्रगाथः= ( विषमा ककुप्, समा सतोबृहती ); १८ उष्णिक्; १९ त्रिष्टुप्; २१ अनुष्टुप् ॥

(ऋग्वेदे) (सामवेदे)

८८६ प्र त आश्विनीः पवमान धेनवो दिव्या असृग्रन्पयसा धरीमणि ।
प्रान्तरिक्षात्स्थाविरीस्ते असृक्षत ये त्वा मृजन्त्यृषिषाण वेधसः ॥१॥
९।८६।४

८८७ उभयतः पवमानस्य रश्मयो ध्रुवस्य सतः परि यन्ति केतवः ।
यदी पवित्रे अधि मृज्यते हरिः सत्ता नि योनौ कलशेषु सीदति ॥२॥
९।८६।६

८८८ विश्वा धामानि विश्वचक्ष ऋभ्वसः प्रभोष्टे सतः परि यन्ति केतवः ।
व्यानशी पवसे सोम धर्मणा पतिर्विश्वस्य भुवनस्य राजसि ॥३॥ ॥१(वी)॥
( धा० ३५ । उ० नास्ति । स्व० ४ ) ९।८६।५

८८९ पवमानो अजीजनद्दिवश्चित्रं न तन्यतुम् ।
ज्योतिर्वैश्वानरं बृहत् ॥ १ ॥ ९।६१।१६ ४८४

८९० पवमान रसस्तव मदो राजन्नदुच्छुनः ।
वि वारमव्यमर्षति ॥ २ ॥ ९।६१।१८

८९१ पवमानस्य ते रसो दक्षो वि राजति द्युमान्।
ज्योतिर्विश्वं स्वर्दृशे ॥ ३ ॥ ॥२(पा)॥ ९।६१।१७

(धा २०। उ० १ स्व० २)

८९२ प्र यद्गावो न भूर्णयस्त्वेषा अयासो अक्रमुः।
घ्नन्तः कृष्णामप त्वचम् ॥ १ ॥ ९।४१।१ ४९१

८९३ सुवितस्य वनामहेऽति सेतुं दुराय्यम्।
साह्याम दस्युमव्रतम् ॥ २ ॥ ९।४१।२

८९४ शृण्वे वृष्टेरिव स्वनः पवमानस्य शुष्मिणः।
चरन्ति विद्युतो दिवि ॥ ३ ॥ ९।४१।३

८९५ आ पवस्व महीमिषं गोमदिन्दो हिरण्यवत्।
अश्ववत्सोम वीरवत् ॥ ४ ॥ ९।४१।४

८९६ पवस्व विश्वचर्षण आ मही रोदसी पृण।
उषाः सूर्यो न रश्मिभिः ॥ ५ ॥ ९।४१।५

८९७ परि णः शर्मयन्त्या धारया सोम विश्वतः।
सरा रसेव विष्टपम् ॥६॥ ॥२ (भी)। ९।४१।६

(धा० ३५। उ० ४। स्व० ४)

॥ इति प्रथमः खण्डः ॥ १ ॥

८९८ आशुरर्ष बृहन्मते परि प्रियेण धाम्ना।
यत्र देवा इति ब्रुवन् ॥ १ ॥ ९।३९।१

८९९ परिष्कृण्वन्ननिष्कृतं जनाय यातयन्निषः।
वृष्टिं दिवः परि स्रव ॥ २ ॥ ९।३९।२

९०० अयं स यो दिवस्परि रघुयामा पवित्र आ।
सिन्धोरूर्मा व्यक्षरत् ॥ ३ ॥ ९।३९।४

९०१ सुत एति पवित्र आ त्विषिं दधान ओजसा।
विचक्षाणो विरोचयन् ॥ ४ ॥ ९।३९।३

(ऋग्वेदे) (सामवेदे)

९०२ आविवासन्परावतो अथो अर्वावतः सुतः ।
इन्द्राय सिच्यते मधु ॥ ५ ॥ ९।३९।५

९०३ समीचीना अनूषत हरिं हिन्वन्त्यद्रिभिः ।
इन्दुमिन्द्राय पीतये ॥ ६ ॥ ॥ ४ (जी) ॥ ९।३९।६

(धा० ३२। उ० ३। स्व० ४)

९०४ हिन्वन्ति सूरमुस्रयः स्वसारो जामयस्पतिम् ।
महामिन्दुं महीयुवः ॥ १ ॥ ९।६५।१

९०५ पवमान रुचारुचा देव देवेभ्यः सुतः ।
विश्वा वसून्या विश ॥ २ ॥ ९।६५।२

९०६ आ पवमान सुष्टुतिं वृष्टिं देवेभ्यो दुवः ।
इषे पवस्व संयतम् ॥३॥ (धा० ११। उ० नास्ति । स्व० १) ॥५ (ह)॥ ९।६५।३

॥ इति द्वितीयः खण्डः ॥ २ ॥

९०७ जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे ।
घृतप्रतीको बृहता दिविस्पृशा द्युमद्वि भाति भरतेभ्यः शुचिः ॥१॥ ५।११।१

९०८ त्वामग्ने अङ्गिरसो गुहा हितमन्वविन्दं च्छिश्रियाणं वनेवने ।
स जायसे मथ्यमानः सहो महत्त्वामाहुः सहसस्पुत्रमङ्गिरः ॥२॥ ५।११।६

९०९ यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समिन्धते ।
इन्द्रेण देवैः सरथं स बर्हिषि सीदन्नि होता यजथाय सुक्रतुः ॥३॥ ॥६(वे)॥

(धा० ३०। उ० नास्ति। स्व० ७) ५।११।२

९१० अयं वां मित्रावरुणा सुतः सोम ऋतावृधा ।
ममेदिह श्रुतं हवम् ॥ १ ॥ २।४१।४

९११ राजानावनभिद्रुहा ध्रुवे सदस्युत्तमे ।
सहस्रस्थूण आशाते ॥ २ ॥ २।४१।५

९१२ ता सम्राजा घृतासुती आदित्या दानुनस्पती ।
सचेते अनवह्वरम् ॥ ३ ॥ (धा० १५। उ० १। स्व० ३) ॥ ७ (पि) ॥ २।४१।६

| | | (ऋग्वेदे) | (सामवेदे) |
|---|---|---|---|
| ९१३ | इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः । जघान नवतीर्नव ॥ १ ॥ | १।८४।१३ | १७९ |
| ९१४ | इच्छन्नश्वस्य यच्छिरः पर्वतेष्वपश्रितम् । तद्विदच्छर्यणावति ॥ २ ॥ | १।८४।१४ | |
| ९१५ | अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् । इत्था चन्द्रमसो गृहे ॥३॥ (धा० १३ । उ० २ । स्व० ४) ॥८(ठी)॥ | १।८४।१५ | १४७ |
| ९१६ | इयं वामस्य मन्मन इन्द्राग्नी पूर्व्यस्तुतिः । अभ्राद्वृष्टिरिवाजनि ॥ १ ॥ | ७।९४।१ | |
| ९१७ | शृणुतं जरितुर्हवमिन्द्राग्नी वनतं गिरः । ईशाना पिप्यतं धियः ॥ २ ॥ | ७।९४।२ | |
| ९१८ | मा पापत्वाय नो नरेन्द्राग्नी माभिशस्तये । मा नो रीरधतं निदे ॥३॥ (धा० १२ । उ० १ । स्व० २ ) ॥९(चा)॥ | ७।९४।३ | |

॥ इति तृतीयः खण्डः ॥ ३ ॥

| | | | |
|---|---|---|---|
| ९१९ | पवस्व दक्षसाधनो देवेभ्यः पीतये हरे । मरुद्भ्यो वायवे मदः ॥ १ ॥ | ९।२५।१ | ४७४ |
| ९२० | सं देवैः शोभते वृषा कविर्योनावधि प्रियः । पवमानो अदाभ्यः ॥ २ ॥ | ९।२५।३ | |
| ९२१ | पवमान धिया हितो३ऽभि योनिं कनिक्रदत् । धर्मणा वायुमारुहः ॥ ३ ॥ ( धा० ११ । उ० २ । स्व० १ ) ॥१०(ख)॥ | ९।२५।२ | |
| ९२२ | तवाहं सोम रारण सख्य इन्दो दिवेदिवे । पुरूणि बभ्रो नि चरन्ति मामव परिधीँ रति ताँ इहि ॥१॥ | ९।१०७।१९ | ५१६ |
| ९२३ | तवाहं नक्तमुत सोम ते दिवा दुहानो बभ्र ऊधनि । घृणा तपन्तमति सूर्यं परः शकुना इव पप्तिम ॥२॥ ॥११(ति)॥ ( धा० १७ । उ० १ । स्व० ३ ) | ९।१०७।२० | |

९२४ पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः। (ऋग्वेदे) (सामवेदे)
शुम्भन्ति विप्रं धीतिभिः ॥ १ ॥ ९।४०।१ ४८८
९२५ आ योनिमरुणो रुहद्गमदिन्द्रो वृषा सुतम्।
ध्रुवे सदसि सीदतु ॥ २ ॥ ९।४०।२
९२६ नू नो रयिं महामिन्दोऽस्मभ्यं सोम विश्वतः।
आ पवस्व सहस्रिणम् ॥३॥ ॥ १२ (चा) ॥ ९।४०।३
(धा० १२। उ० १। स्व० २)

॥ इति चतुर्थः खण्डः ॥४॥

९२७ पिबा सोममिन्द्र मदन्तु त्वा यं ते सुषाव हर्यश्वाद्रिः।
सोतुर्बाहुभ्यां सुयतो नार्वा ॥ १ ॥ ७।२२।१ ३९८
९२८ यस्ते मदो युज्यश्चारुरस्ति येन वृत्राणि हर्यश्व हंसि।
स त्वामिन्द्र प्रभूवसो ममत्तु ॥ २ ॥ ७।२२।२
९२९ बोधा सु मे मघवन्वाचमेमां यां ते वसिष्ठो अर्चति प्रशस्तिम्।
इमा ब्रह्म सधमादे जुषस्व ॥ ३ ॥ ॥१३(चा)॥ ७।२२।३
(धा० १२। उ० १। स्व० २)

९३० विश्वाः पृतना अभिभूतरं नरः सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे।
क्रत्वे वरे स्थेमन्यामुरीमुतोग्रमोजिष्ठं तरसं तरस्विनम् ॥ १ ॥ ८।९७।१० ३७०
९३१ नेमिं नमन्ति चक्षसा मेषं विप्रा अभिस्वरे।
सुदीतयो वो अद्रुहोऽपि कर्णे तरस्विनः समृक्वभिः ॥ २ ॥ ८।९७।१२
९३२ समु रेभासो अस्वरन्निन्द्रं सोमस्य पीतये।
स्वःपतिर्यदी वृधे धृतव्रतो ह्योजसा समूतिभिः ॥३॥ ॥१४(ची)॥ ८।९७।११
( धा० २२। उ० १। स्व० ४)

९३३ यो राजा चर्षणीनां याता रथेभिरध्रिगुः।
विश्वासां तरुता पृतनानां ज्येष्ठं यो वृत्रहा गृणे ॥ १ ॥ ८।७०।१ २७३

९३४ इन्द्रं तं शुम्भ पुरुहन्मन्नवसे यस्य द्विता विधर्तरि ।
हस्तेन वज्रः प्रति धायि दर्शतो महां देवो न सूर्यः ॥२॥ १५(चि)॥ ८।७०।२
(धा० १७ । उ० १ । स्व० ३ )

॥ इति पञ्चमः खण्डः ॥ ५ ॥

९३५ परि प्रिया दिवः कविर्वयांसि नप्त्योर्हितः ।
स्वानैर्याति कविक्रतुः ॥ १ ॥ ९।९।१ ४७६

९३६ स सूनुर्मातरा शुचिर्जातो जाते अरोचयत् ।
महान्मही ऋतावृधा ॥ २ ॥ ९।९।३

९३७ प्रप्र क्षयाय पन्यसे जनाय जुष्टो अद्रुहः ।
वीत्यर्ष पनिष्टये ॥ ३ ॥ ( धा० ३ । उ० नास्ति । स्व० ३ ) ॥१६(रि)॥ ९।९।२

९३८ त्वं ह्या३ङ्ग दैव्य पवमान जनिमानि द्युमत्तमः ।
अमृतत्वाय घोषयन् ॥ १ ॥ ९।१०८।३ ५८३

९३९ येना नवग्वा दध्यङ्ङपोर्णुते येन विप्रास आपिरे ।
देवानां सुम्ने अमृतस्य चारुणो येन श्रवांस्याशत ॥२॥१७(पौ)॥ ९।१०८।४
( धा० ११ । उ० १ । स्व० नास्ति )

९४० सोमः पुनान ऊर्मिणाव्यं वारं वि धावति ।
अग्रे वाचः पवमानः कनिक्रदत् ॥ १ ॥ ९।१०६।१० ५७२

९४१ धीभिर्मृजन्ति वाजिनं वने क्रीडन्तमत्यविम् ।
अभि त्रिपृष्ठं मतयः समस्वरन् ॥ २ ॥ ९।१०६।११

९४२ असर्जि कलशां अभि मीढ्वांत्सप्तिर्न वाजयुः ।
पुनानो वाचं जनयन्नसिष्यदत् ॥ ३ ॥ ॥ १८ (फा) ॥ ९।१०६।१२
(धा० १० । उ० २ । स्व० २)

९४३ सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः ।
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥ १ ॥ ९।९६।५ ५२७

९४४ ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् । (ऋग्वेदे) (सामवेदे)
श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् ॥ २ ॥ ९।९६।६

९४५ प्रावीविपद्वाच ऊर्मिं न सिन्धुर्गिर स्तोमान्पवमानो मनीषाः ।
अन्तः पश्यन्वृजनेमावराण्या तिष्ठति वृषभो गोषु जानन् ॥ ३ ॥ १९(फू) ॥
(धा० ३० । उ० २ । स्व० ६ )    ९।९६।७

॥ इति षष्ठः खण्डः ॥६॥

९४६ अग्निं वो वृधन्तमध्वराणां पुरूतमम् ।
अच्छा नप्त्रे सहस्वते ॥ १ ॥    ८।१०२।७    २१

९४७ अयं यथा न आभुवत्त्वष्टा रूपेव तक्ष्या ।
अस्य क्रत्वा यशस्वतः ॥ २ ॥    ८।१०२।८

९४८ अयं विश्वा अभि श्रियोऽग्निर्देवेषु पत्यते ।
आ वाजैरुप नो गमत् ॥ ३ ॥    ॥ २० (डा) ॥ ८।१०२।९
( धा० ८ । उ० ३ । स्व० २ )

९४९ इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम् ।
शुक्रस्य त्वाभ्यक्षरन्धारा ऋतस्य सादने ॥ १ ॥    १।८४।४    ३४४

९५० न किष्ट्वद्रथीतरो हरी यदिन्द्र यच्छसे ।
न किष्ट्वानु मज्मना न किः स्वश्व आनशे ॥ २ ॥    १।८४।६

९५१ इन्द्राय नूनमर्चतोक्थानि च ब्रवीतन ।
सुता अमत्सुरिन्दवो ज्येष्ठं नमस्यता सहः ॥ ३ ॥ ॥२१(र)॥ १।८४।५
( धा० ८ । उ० नास्ति । स्व० १ )

९५२ इन्द्र जुषस्व प्र वहा याहि शूर हरिह ।
पिबा सुतस्य मतिर्न मधोश्चकानश्चारुर्मदाय ॥ १ ॥    (न ऋग्वेदीयः)

९५३ इन्द्र जठरं नव्यं न पृणस्व मधोर्दिवो न ।
अस्य सुतस्य स्वा३र्णोप त्वा मदाः सुवाचो अस्थुः ॥२॥    (न ऋग्वेदीयः)

९५४ इन्द्रस्तुराषाण्मित्रो न जघान वृत्रं यतिर्न ।
बिभेद वलं भृगुर्न ससाहे शत्रून्मदे सोमस्य ॥ ३ ॥२२(ङ)॥ (न ऋग्वेदीयः)
(धा० ११। उ० ५। स्व० १)

॥ इति सप्तमः खण्डः ॥ ७ ॥
॥ इति तृतीयप्रपाठके प्रथमोऽर्धः ॥ ३ ॥
॥ इति पञ्चमोऽध्यायः ॥ ५ ॥

## अथ षष्ठोऽध्यायः ।

[ २ ]

अथ तृतीयप्रपाठके द्वितीयोऽर्धः ॥ ३ ॥

(१-२३) १ (अकृष्टा माषादयः) त्रयः ऋषयः; २ कश्यपो मारीचः; ३, ४, १३ असितः काश्यपो देवलो वा; ५ अवत्सारः काश्यपः; ६, १६ जमदग्निर्भार्गवः; ७ अरुणो वैतहव्यः; ८ उरुचक्रिरात्रेयः; ९ कुरुसुतिः काण्वः; १० भरद्वाजो बार्हस्पत्यः; ११ भृगुर्वारुणिर्जमदग्निर्भार्गवो वा; १२ सप्तर्षयः (१ भरद्वाजो बार्हस्पत्यः, २ कश्यपो मारीचः, ३ गोतमो राहूगणः, ४ अत्रिर्भौमः, ५ विश्वामित्रो गाथिनः, ६ जमदग्निर्भार्गवः, ७ वसिष्ठो मैत्रावरुणिः ); १४,१५,२३ गोतमो राहूगणः; १७ (१) ऊर्ध्वसद्मा आङ्गिरसः, १७ ( २ ) कृतयशा आङ्गिरसः; १८ त्रित आप्त्यः; १९ रेभसूनू काश्यपौ; २० मन्युर्वासिष्ठः; २१ वसुश्रुत आत्रेयः; २२ नृमेध आङ्गिरसः ॥ १-६, ११-१३, १६-२० पवमानः सोमः; ७, २१ अग्निः; ८ मित्रावरुणौ; ९, १४-१५, २२-२३ इन्द्रः; १० इंद्राग्नी ॥ १,७ जगती; २-६, ८-११, १३, १६ गायत्री; १२ बृहती; १४,१५,२१ पंक्तिः; १७ काकुभः प्रगाथः= ( विषमा ककुप्, समा सतो बृहती ); १८, २२ उष्णिक्; १९,२३ अनुष्टुप्; २० त्रिष्टुप् ॥

९५५ गोवित्पवस्व वसुविद्धिरण्यविद्रेतोधा इन्दो भुवनेष्वर्पितः । (ऋग्वेदे)
त्वं सुवीरो असि सोम विश्ववित्तं त्वा नर उप गिरेम आसते ॥१॥ ९।८६।३९
९५६ त्वं नृचक्षा असि सोम विश्वतः पवमान वृषभ ता वि धावसि ।
स नः पवस्व वसुमद्धिरण्यवद्वयं स्याम भुवनेषु जीवसे ॥२॥ ९।८६।३८
९५७ ईशान इमा भुवनानि ईयसे युजान इन्दो हरितः सुपर्ण्यः ।
तास्ते क्षरन्तु मधुमद्घृतं पयस्तव व्रते सोम तिष्ठन्तु कृष्टयः ॥३॥१(ग्वी)॥
(धा० ४१। उ० २। स्व० ४) ९।८६।३७

९५८ पवमानस्य विश्ववित्प्र ते सर्गा असृक्षत ।
सूर्यस्येव न रश्मयः ॥ १ ॥ ९।६४।७

(ऋग्वेदे) (सामवेदे)

९५९ केतुं कृण्वं दिवस्परि विश्वा रूपाभ्यर्षसि ।
समुद्रः सोम पिन्वसे ॥ २ ॥ ९।६४।८
९६० जज्ञानो वाचमिष्यसि पवमान विधर्मणि ।
क्रन्दं देवो न सूर्यः ॥ ३ ॥ (धा० १५। उ० १। स्व० २) ॥२ (पा)॥ ९।६४।९

९६१ प्र सोमासो अधन्विषुः पवमानास इन्दवः ।
श्रीणाना अप्सु वृञ्जते ॥ १ ॥ ९।२४।१
९६२ अभि गावो अधन्विषुरापो न प्रवता यतीः ।
पुनाना इन्द्रमाशत ॥ २ ॥ ९।२४।२
९६३ प्र पवमान धन्वसि सोमेन्द्राय मादनः ।
नृभिर्यतो वि नीयसे ॥ ३ ॥ ९।२४।३
९६४ इन्दो यदद्रिभिः सुतः पवित्रं परिदीयसे ।
अरमिन्द्रस्य धाम्ने ॥ ४ ॥ ९।२४।५
९६५ त्वं सोम नृमादनः पवस्व चर्षणीधृतिः ।
सस्निर्यो अनुमाद्यः ॥ ५ ॥ ९।२४।४
९६६ पवस्व वृत्रहन्तम उक्थेभिरनुमाद्यः ।
शुचिः पावको अद्भुतः ॥ ६ ॥ ९।२४।६
९६७ शुचिः पावक उच्यते सोमः सुतः स मधुमान् ।
देवावीरघशंसहा ॥ ७ ॥ (धा० ४१। उ०नास्ति । स्व० ८) ॥३(है)॥ ९।२४।७

॥ इति प्रथमः खण्डः ॥ १ ॥

९६८ प्र कविर्देववीतयेऽव्या वारेभिरव्यत ।
साह्वान्विश्वा अभि स्पृधः ॥ १ ॥ ९।२०।१
९६९ स हि ष्मा जरितृभ्य आ वाजं गोमन्तमिन्वति ।
पवमानः सहस्त्रिणम् ॥ २ ॥ ९।२०।२

(ऋग्वेदे) (सामवेदे)

९७० परि विश्वानि चेतसा मृज्यसे पवसे मती ।
स नः सोम श्रवो विदः ॥ ३ ॥ ९।२०।३

९७१ अभ्यर्ष बृहद्यशो मघवद्भ्यो ध्रुवं रयिम् ।
इषं स्तोतृभ्य आ भर ॥ ४ ॥ ९।२०।४

९७२ त्वं राजेव सुव्रतो गिरः सोमाविवेशिथ ।
पुनानो वह्ने अद्भुत ॥ ५ ॥ ९।२०।५

९७३ स वह्निरप्सु दुष्टरो मृज्यमानो गभस्त्योः ।
सोमश्चमूषु सीदति ॥ ६ ॥ ९।२०।६

९७४ क्रीडुर्मखो न मंहयुः पवित्रं सोम गच्छसि ।
दधत्स्तोत्रे सुवीर्यम् ॥ ७ ॥ ॥ ४(को)॥ ९।२०।७
(धा० २१। उ० ३। स्व० ९)

९७५ यवंयवं नो अन्धसा पुष्टंपुष्टं परि स्रव ।
विश्वा च सोम सौभगा ॥ १ ॥ ९।५५।१

९७६ इन्दो यथा तव स्तवो यथा ते जातमन्धसः ।
नि बर्हिषि प्रिये सदः ॥ २ ॥ ९।५५।२

९७७ उत नो गोविदश्ववित्पवस्व सोमान्धसा ।
मक्षूतमेभिरहभिः ॥ ३ ॥ ९।५५।३

९७८ यो जिनाति न जीयते हन्ति शत्रुमभीत्य ।
स पवस्व सहस्रजित् ॥ ४ ॥(धा०११। उ०नास्ति। स्व० ३)॥५(हि)॥ ९।५५।४

९७९ यास्ते धारा मधुश्चुतोऽसृग्रमिन्द ऊतये ।
ताभिः पवित्रमासदः ॥ १ ॥ ९।६२।७

९८० सो अर्षेन्द्राय पीतये तिरो वाराण्यव्यया ।
सीदन्नृतस्य योनिमा ॥ २ ॥ ९।६२।८

९८१ त्वं सोम परि स्रव स्वादिष्ठो अङ्गिरोभ्यः । (ऋग्वेदे) (सामवेदे)
वरिवोविद्घृतं पयः ॥ ३ ॥ ( धा० ११ । उ० नास्ति । स्व० ३ ) ॥६ (हि)॥ ९।६२।९

॥ इति द्वितीयः खण्डः ॥२॥

९८२ तव श्रियो वर्ष्यस्येव विद्युतोऽग्नेश्चिकित्र उषसामिवेतयः ।
यदोषधीरभिसृष्टो वनानि च परि स्वयं चिनुषे अन्नमासनि ॥१॥ १०।९१।५
९८३ वातोपजूत इषितो वशाँ अनु तृषु यदन्ना वेविषद्वितिष्ठसे ।
आ ते यतन्ते रथ्योऽयथा पृथक् शर्धांस्यग्ने अजरस्य धक्षतः ॥२॥ १०।९१।७
९८४ मेधाकारं विदथस्य प्रसाधनमग्निं होतारं परिभूतरं मतिम् ।
त्वामर्भस्य हविषः समानमित्त्वां महो वृणते नान्यं त्वत् ॥३॥७(बु)॥ १०।९१।८
(धा० ३५ । उ० ३ । स्व० ५)

९८५ पुरूरुणा चिद्ध्यस्त्यवो नूनं वां वरुण ।
मित्र वंसि वां सुमतिम् ॥ १ ॥ ५।७०।१
९८६ ता वां सम्यगद्रुह्वाणेषमश्याम धाम च ।
वयं वां मित्रा स्याम ॥ २ ॥ ५।७०।२
९८७ पातं नो मित्रा पायुभिरुत त्रायेथां सुत्रात्रा ।
साह्याम दस्यूं तनूभिः ॥ ३ ॥ (धा० १२ । उ० नास्ति । स्व० १)॥८(य)॥ ५।७०।३

९८८ उत्तिष्ठन्नोजसा सह पीत्वा शिप्रे अवेपयः ।
सोममिन्द्र चमू सुतम् ॥ १ ॥ ८।७६।१०
९८९ अनु त्वा रोदसी उभे स्पर्धमानमददेताम् ।
इन्द्र यद्दस्युहाभवः ॥ २ ॥ ८।७६।११
९९० वाचमष्टापदीमहं नवस्रक्तिमृतावृधम् ।
इन्द्रात्परितन्वं ममे ॥३॥ ( धा० ११ । उ० नास्ति । स्व० ४ ) ॥९ (ही)॥ ८।७६।१२

९९१ इन्द्राग्नी युवामिमेऽभि स्तोमा अनूषत ।
पिबतं शम्भुवा सुतम् ॥ १ ॥ ६।६०।७

(ऋग्वेदे) (सामवेदे)

९९२ या वां सन्ति पुरुस्पृहो नियुतो दाशुषे नरा।
इन्द्राग्नी ताभिरा गतम् ॥ २ ॥ ६।६०।८

९९३ ताभिरा गच्छतं नरोपेदं सवनं सुतम्।
इन्द्राग्नी सोमपीतये ॥३॥ (धा० ११ । उ० नास्ति । स्व०२ ) ॥१०(ह्रा)॥ ६।६०।९

॥ इति तृतीयः खण्डः ॥३॥

९९४ अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत्।
सीदन्योनौ वनेष्वा ॥ १ ॥ ९।६५।१९ ५०२

९९५ अप्सा इन्द्राय वायवे वरुणाय मरुद्भ्यः।
सोमा अर्षन्तु विष्णवे ॥ २ ॥ ९।६५।२०

९९६ इषं तोकाय नो दधदस्मभ्यं सोम विश्वतः।
आ पवस्व सहस्रिणम् ॥३॥ (धा० १४ । उ० नास्ति । स्व० २) ॥११(ला)॥ ९।६५।२१

९९७ सोम उ ष्वाणः सोतृभिरधि ष्णुभिरवीनाम्।
अश्वयेव हरिता याति धारया मन्द्रया याति धारया ॥१॥ ९।१०७।८ ५१५

९९८ अनूपे गोमान् गोभिरक्षाः सोमो दुग्धाभिरक्षाः।
समुद्रं न संवरणान्यग्मन्मन्दी मदाय तोशते ॥२॥ ॥१२(फ)॥ ९।१०७।९
(धा० १५ । उ० २ । स्व० १)

९९९ यत्सोम चित्रमुक्थ्यं दिव्यं पार्थिवं वसु।
तन्नः पुनान आ भर ॥ १ ॥
९।१९।१

१००० वृषा पुनान आयूंषि स्तनयन्नधि बर्हिषि।
हरिः सन्योनिमासदः ॥ २ ॥
९।१९।२

१००१ युवं हि स्थः स्वःपती इन्द्रश्च सोम गोपती।
ईशाना पिप्यतं धियः ॥३॥ (धा० १५ । उ० १ । स्व० ५) ॥ १३ (पु) ॥ ९।१९।२

॥ इति चतुर्थः खण्डः ॥४॥

१००२ इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः । (ऋग्वेदे) (सामवेदे)
तमिन्महत्स्वाजिषूतिमर्भे हवामहे स वाजेषु प्र नोऽविषत् ॥१॥ १।८१।१ ४११

१००३ असि हि वीर सेन्योऽसि भूरि पराददिः ।
असि दभ्रस्य चिद्वृधो यजमानाय शिक्षसि सुन्वते भूरि ते वसु ॥२॥ १।८१।२

१००४ यदुदीरत आजयो धृष्णवे धीयते धनम् ।
युङ्क्ष्वा मदच्युता हरी कं हनः कं वसौ दधोऽस्माँ इन्द्र वसौ दधः ॥३॥१४(खु)॥
(धा० २६। उ० २। स्व० ५) १।८१।३ ४१४

१००५ स्वादोरित्था विषूवतो मधोः पिबन्ति गौर्यः ।
या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभथा वस्वीरनु स्वराज्यम् ॥ १ ॥
१।८४।१० ४०९

१००६ ता अस्य पृशनायुवः सोमं श्रीणन्ति पृश्नयः ।
प्रिया इन्द्रस्य धेनवो वज्रं हिन्वन्ति सायकं वस्वीरनु स्वराज्यम् ॥ २ ॥
१।८४।११

१००७ ता अस्य नमसा सहः सपर्यन्ति प्रचेतसः ।
व्रतान्यस्य सश्चिरे पुरूणि पूर्वचित्तये वस्वीरनु स्वराज्यम् ॥३॥ १५ (व) ॥
(धा० १५। उ० नास्ति। स्व० १) १।८४।१२

॥ इति पञ्चमः खण्डः ॥ ५ ॥

१००८ असाव्यंशुर्मदायाप्सु दक्षो गिरिष्ठाः ।
श्येनो न योनिमासदत् ॥ १ ॥ ९।६२।४ ४७३

१००९ शुभ्रमन्धो देववातमप्सु धौतं नृभिः सुतम् ।
स्वदन्ति गावः पयोभिः ॥ २ ॥ ९।६२।५

१०१० आदीमश्वं न हेतारमशूशुभन्नमृताय ।
मधो रसं सधमादे ॥ ३ ॥ (धा० १२। उ० १। स्व० ५) ॥ १६ (चु) ॥ ९।६२।६

१०११ अभि द्युम्नं बृहद्यश इषस्पते दिदीहि देव देवयुम् ।
वि कोशं मध्यमं युव ॥ १ ॥ ९।१०८।९ ५७९

१०१२ आ वच्यस्व सुदक्ष चम्वोः सुतो विशां वह्निर्न विश्पतिः । (ऋग्वेदे) (सामवेदे)
वृष्टिं दिवः पवस्व रीतिमपो जिन्वन् गविष्टये धियः ॥ २ ॥ १७ (डा) ॥
(धा० १८ । उ० ३ । स्व० २) ९।१०८।१०

१०१३ प्राणा शिशुर्महीनां हिन्वन्नृतस्य दीधितिम् ।
विश्वा परि प्रिया भुवदध द्विता ॥ १ ॥ ९।१०२।१ ५७०
१०१४ उप त्रितस्य पाष्यो३रभक्त यद्गुहा पदम् ।
यज्ञस्य सप्त धामभिरध प्रियम् ॥ २ ॥ ९।१०२।२
१०१५ त्रीणि त्रितस्य धारया पृष्ठेष्वैरयद्रयिम् ।
मिमीते अस्य योजना वि सुक्रतुः ॥ ३ ॥ ॥ १८ (री) ॥ ९।१०२।३
(धा० ८ । उ० नास्ति । स्व० ४)

१०१६ पवस्व वाजसातये पवित्रे धारया सुतः ।
इन्द्राय सोम विष्णवे देवेभ्यो मधुमत्तरः ॥ १ ॥ ९।१००।६
१०१७ त्वां रिहन्ति धीतयो हरिं पवित्रे अद्रुहः ।
वत्सं जातं न मातरः पवमान विधर्मणि ॥ २ ॥ ९।१००।७
१०१८ त्वं द्यां च महिव्रत पृथिवीं चाति जभ्रिषे ।
प्रति द्रापिममुञ्चथाः पवमान महित्वना ॥ ३ ॥ १९ (ता) ॥ ९।१००।९
(धा० २४ । उ० १ । स्व० २)

१०१९ इन्दुर्वाजी पवते गोन्योघा इन्द्रे सोमः सह इन्वन्मदाय ।
हन्ति रक्षो बाधते पर्यरातिं वरिवस्कृण्वन्वृजनस्य राजा ॥ १ ॥ ९।९७।१० ५४०
१०२० अध धारया मध्वा पृचानस्तिरो रोम पवते अद्रिदुग्धः ।
इन्दुरिन्द्रस्य सख्यं जुषाणो देवो देवस्य मत्सरो मदाय ॥ २ ॥ ९।९७।११
१०२१ अभि व्रतानि पवते पुनानो देवो देवान्त्स्वेन रसेन पृञ्चन् ।
इन्दुर्धर्माण्यृतुथा वसानो दश क्षिपो अव्यत सानो अव्ये ॥३॥२०(पी)॥
(धा० २० । उ० १ स्व० ४) ९।९७।१२

॥ इति ... ॥

(ऋग्वेदे) (सामवेदे)

१०२२ आ ते अग्न इधीमहि द्युमन्तं देवाजरम् ।
यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषं स्तोतृभ्य आ भर ॥१॥ ५।६।४

१०२३ आ ते अग्न ऋचा हविः शुक्रस्य ज्योतिषस्पते ।
सुश्चन्द्र दस्म विश्पते हव्यवाट् तुभ्यं हूयत इषं स्तोतृभ्य आ भर ॥२॥ [५।६।५]

१०२४ ओभे सुश्चन्द्र विश्पते दर्वी श्रीणीष आसनि ।
उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषं स्तोतृभ्य आ भर ॥३॥२१(रा)॥
(धा० २८ । उ० नास्ति । स्व० २) ५।६।९

१०२५ इन्द्राय साम गायत विप्राय बृहते बृहत् ।
ब्रह्मकृते विपश्चिते पनस्यवे ॥ १ ॥ ८।९८।१ ३८८

१०२६ त्वमिन्द्राभिभूरसि त्वं सूर्यमरोचयः ।
विश्वकर्मा विश्वदेवो महाँ असि ॥ २ ॥ ८।९८।२

१०२७ विभ्राजं ज्योतिषा स्व३रगच्छो रोचनं दिवः ।
देवास्त इन्द्र सख्याय येमिरे ॥३ (धा० १५। उ० नास्ति। स्व० १) २२(व)॥ ८।९८।३

१०२८ असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।
आ त्वा पृणक्त्विन्द्रियं रजः सूर्यो न रश्मिभिः ॥ १ ॥ १।८४।१ ३४७

१०२९ आ तिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी ।
अर्वाचीनं सु ते मनो ग्रावा कृणोतु वग्नुना ॥ २ ॥ १।८४।३

१०३० इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम् ।
ऋषीणां सुष्टुतीरुप यज्ञं च मानुषाणाम् ॥३॥ ॥ २३ (पा) ॥ १।८४।२
(धा० १० । उ० १ । स्व० २)

॥ इति सप्तमः खण्डः॥७॥

॥ इति तृतीयप्रपाठके द्वितीयोऽर्धः ॥ ३ ॥

॥तृतीयः प्रपाठकश्च समाप्तः॥३॥

॥ इति षष्ठोऽध्यायः ॥ ६ ॥

# अथ सप्तमोऽध्यायः ।

## [ १ ]

अथ चतुर्थप्रपाठके प्रथमोऽर्धः ॥ ४ ॥

( १-२४ ) १ ( अकृष्टमाषादयः ) त्रयः; २,११ कश्यपो मारीचः; ३ मेधातिथिः काण्वः; ४ हिरण्यस्तूप आङ्गिरसः; ५ अवत्सारः काश्यपः; ६ जमदग्निर्भार्गवः; ७, २१ कुत्स आङ्गिरसः; ८ वसिष्ठो मैत्रावरुणिः; ९ त्रिशोकः काण्वः; १० श्यावाश्व आत्रेयः; १२ सप्तर्षयः ( १ भरद्वाजो बार्हस्पत्यः, २ कश्यपो मारीचः; ३ गोतमो राहूगणः, ४ अत्रिर्भौमः, ५ विश्वामित्रो गाथिनः, ६ जमदग्निर्भार्गवः, ७ वसिष्ठो मैत्रावरुणिः ), १३ अमहीयुरांगिरसः; १४ शुनःशेप आजीगर्तिः; १५ मधुच्छन्दा वैश्वामित्रः; १६ ( १,३,२-पूर्वार्धः ) मान्धाता यौवनाश्वः, १६ ( २ उत्तरार्धः ) गोधा ऋषिका; १७ असितः काश्यपो देवलो वा; १८ (१) ऋणंचयो राजर्षिः, १८ (२) शक्तिर्वासिष्ठः; १९ पर्वतनारदौ काण्वौ; २० मनुः सांवरणः, २२ बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्च क्रमेण गोपायना लौपायना वा; २३ भुवन आप्त्यः साधनो वा भौवनः ॥ १-६, ११-१३, १७-२१ पवमानः सोमः; ७, २२ अग्निः, ८ आदित्यः, ९, १४-१६ इन्द्रः; १० इन्द्राग्नी; २३ विश्वे देवाः, २४ ॥ १, ७ जगती; २-६, ८-११, १३-१५, १७ गायत्री; १२ प्रगाथः= ( विषमा बृहती, समा सतोबृहती ); १६ महापंक्तिः; १८ ( १ ) यवमध्या गायत्री, १८ ( २ ) सतो बृहती; १९ उष्णिक्; २० अनुष्टुप् ; २१ त्रिष्टुप् ; २२ द्विपदा विराट्; २३ द्विपदा त्रिष्टुप्; २४ ॥

१०३१ ज्योतिर्यज्ञस्य पवते मधु प्रियं पिता देवानां जनिता विभूवसुः । (ऋग्वेदे) (सामवेदे)
दधाति रत्नं स्वधयोरपीच्यं मदिन्तमो मत्सर इन्द्रियो रसः ॥१॥ ९।८६।१०

१०३२ अभिक्रन्दन्कलशं वाज्यर्षति पतिर्दिवः शतधारो विचक्षणः ।
हरिर्मित्रस्य सदनेषु सीदति मर्मृजानोऽविभिः सिन्धुभिर्वृषा ॥२॥ ९।८६।११

१०३३ अग्रे सिन्धूनां पवमानो अर्षस्यग्रे वाचो अग्रियो गोषु गच्छसि ।
अग्रे वाजस्य भजसे महद्धनं स्वायुधः सोतृभिः सोम सूयसे ॥३॥१(लु)॥
( धा० २९ । उ० नास्ति । स्व० ५ ) ९।८६।१२

१०३४ असृक्षत प्र वाजिनो गव्या सोमासो अश्वया ।
शुक्रासो वीरयाशवः ॥ १ ॥ ९।६४।४ ४८२

१०३५ शुम्भमाना ऋतायुभिर्मृज्यमाना गभस्त्योः ।
पवन्ते वारे अव्यये ॥ २ ॥ ९।६४।५

१०३६ ते विश्वा दाशुषे वसु सोमा दिव्यानि पार्थिवा ।
पवन्तामान्तरिक्ष्या ॥ ३ ॥ (धा० २० । उ० नास्ति । स्व० ४) ॥ २(वी) ॥ ९।६४।६

(ऋग्वेदे) (सामवेदे)

१०३७ पवस्व देववीरति पवित्रं सोम रंह्या ।
इन्द्रमिन्दो वृषा विश ॥ १ ॥ ९।२।१

१०३८ आ वच्यस्व महि प्सरो वृषेन्दो द्युम्नवत्तमः ।
आ योनिं धर्णसिः सदः ॥ २ ॥ ९।२।२

१०३९ अधुक्षत प्रियं मधु धारा सुतस्य वेधसः ।
अपो वसिष्ट सुक्रतुः ॥ ३ ॥ ९।२।३

१०४० महान्तं त्वा महीरन्वापो अर्षन्ति सिन्धवः ।
यद्गोभिर्वासयिष्यसे ॥ ४ ॥ ९।२।४

१०४१ समुद्रो अप्सु मामृजे विष्टम्भो धरुणो दिवः ।
सोमः पवित्रे अस्मयुः ॥ ५ ॥ ९।२।५

१०४२ अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः ।
सं सूर्येण दिद्युते ॥ ६ ॥ ९।२।६ ४९७

१०४३ गिरस्त इन्द ओजसा मर्मृज्यन्ते अपस्युवः ।
याभिर्मदाय शुम्भसे ॥ ७ ॥ ९।२।७

१०४४ तं त्वा मदाय घृष्वय उ लोककृत्नुमीमहे ।
तव प्रशस्तये महे ॥ ८ ॥ ९।२।८

१०४५ गोषा इन्दो नृषा अस्यश्वसा वाजसा उत ।
आत्मा यज्ञस्य पूर्व्यः ॥ ९ ॥ ९।२।१०

१०४६ अस्मभ्यमिन्दविन्द्रियं मधोः पवस्व धारया ।
पर्जन्यो वृष्टिमाँ इव ॥ १० ॥ (धा० ५१ । उ० १ । स्व० ८) ॥३(कै)॥ ९।२।९

॥ इति प्रथमः खण्डः ॥१॥

१०४७ सना च सोम जेषि च पवमान महि श्रवः ।
अथा नो वस्यसस्कृधि ॥ १ ॥ ९।४।१

(ऋग्वेदे) (सामवेदे)

१०४८ सना ज्योतिः सना स्व१र्विश्वा च सोम सौभगा ।
अथा नो वस्यसस्कृधि ॥ २ ॥ ९।४।२

१०४९ सना दक्षमुत क्रतुमप सोम मृधो जहि ।
अथा नो वस्यसस्कृधि ॥ ३ ॥ ९।४।३

१०५० पवीतारः पुनीतन सोममिन्द्राय पातवे ।
अथा नो वस्यसस्कृधि ॥ ४ ॥ ९।४।४

१०५१ त्वं सूर्ये न आ भज तव क्रत्वा तवोतिभिः ।
अथा नो वस्यसस्कृधि ॥ ५ ॥ ९।४।५

१०५२ तव क्रत्वा तवोतिभिर्ज्योक्पश्येम सूर्यम् ।
अथा नो वस्यसस्कृधि ॥ ६ ॥ ९।४।६

१०५३ अभ्यर्ष स्वायुध सोम द्विबर्हसं रयिम् ।
अथा नो वस्यसस्कृधि ॥ ७ ॥ ९।४।७

१०५४ अभ्य१र्षानपच्युतो वाजिन्त्समत्सु सासहिः ।
अथा नो वस्यसस्कृधि ॥ ८ ॥ ९।४।८

१०५५ त्वां यज्ञैरवीवृधन्पवमान विधर्मणि ।
अथा नो वस्यसस्कृधि ॥ ९ ॥ ९।४।९

१०५६ रयिं नश्चित्रमश्विनमिन्दो विश्वायुमा भर ।
अथा नो वस्यसस्कृधि ॥१०॥ (धा० २२ । उ० १ । स्व० २)॥४(चा)॥ ९।४।१०

१०५७ तरत्स मन्दी धावति धारा सुतस्यान्धसः ।
तरत्स मन्दी धावति ॥ १ ॥ ९।५८।१ ५००

१०५८ उस्रा वेद वसूनां मर्तस्य देव्यवसः ।
तरत्स मन्दी धावति ॥ २ ॥ ९।५८।२

१०५९ ध्वस्रयोः पुरुषन्त्योरा सहस्राणि दद्महे ।
तरत्स मन्दी धावति ॥ ३ ॥ ९।५८।३

१०६० आ यर्योस्त्रिंशतं तना सहस्राणि च दद्महे । (ऋग्वेदे) (सामवेदे)
तरत्स मन्दी धावति ॥ ४ ॥ (धा० ६ । उ० नास्ति । स्व०२ ) ॥५(हा)॥९।५८।४

१०६१ एते सोमा असृक्षत गृणानाः शवसे महे ।
मदिन्तमस्य धारया ॥ १ ॥ ९।६२।२२

१०६२ अभि गव्यानि वीतये नृम्णा पुनानो अर्षसि ।
सनद्वाजः परि स्रव ॥ २ ॥ ९।६२।२३

१०६३ उत नो गोमतीरिषो विश्वा अर्ष परिष्टुभः ।
गृणानो जमदग्निना ॥ ३ ॥ (धा० १५ । उ० नास्ति । स्व० ३ )॥६(वि)॥९।६२।२४

१०६४ इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया ।
भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ॥१॥ १।९४।१

१०६५ भरामेध्मं कृणवामा हवींषि ते चितयन्तः पर्वणापर्वणा वयम् ।
जीवातवे प्रतरां साधया धियोऽग्ने सख्ये मा रिषामा वयं तव ॥२॥ १।९४।४

१०६६ शकेम त्वा समिधं साधया धियस्त्वे देवा हविरदन्त्याहुतम् ।
त्वमादित्याँ आ वह तान्ह्यु३श्मस्यग्ने सख्ये मा रिषामा वयं तव ॥३॥७(छौ)॥
( धा० ३७ । उ० २ । स्व० १० )१।९४।३

॥ इति द्वितीयः खण्डः ॥४॥

१०६७ प्रति वां सूर उदिते मित्रं गृणीषे वरुणम् ।
अर्यमणं रिशादसम् ॥ १ ॥ ७।६६।७

१०६८ राया हिरण्यया मतिरियमवृकाय शवसे ।
इयं विप्रा मेधसातये ॥ २ ॥ ७।६६।८

१०६९ ते स्याम देव वरुण ते मित्र सूरिभिः सह ।
इषं स्वश्च धीमहि ॥ ३ ॥ ( धा० ११ । उ० नास्ति । स्व० २ )॥८(हा)॥७।६६।९

(ऋग्वेदे)(सामवेदे)

१०७० भिन्धि विश्वा अप द्विषः परि बाधो जही मृधः ।
वसु स्पार्हं तदा भर ॥ १ ॥ ८।४५।४० १३४
१०७१ यस्य ते विश्वमानुषग्भूरर्दत्तस्य वेदति ।
वसु स्पार्हं तदा भर ॥ २ ॥ ८।४५।४२
१०७२ यद्वीडाविन्द्र यत्स्थिरे यत्पर्शाने पराभृतम् ।
वसु स्पार्हं तदा भर ॥ ३ ॥ (धा० १२ । उ० १ । स्व० ६) ॥ ९(चू) ॥ ८।४५।४१ २०७

१०७३ यज्ञस्य हि स्थ ऋत्विजा सस्नी वाजेषु कर्मसु ।
इन्द्राग्नी तस्य बोधतम् ॥ १ ॥ ८।३८।१
१०७४ तोशासा रथयावाना वृत्रहणापराजिता ।
इन्द्राग्नी तस्य बोधतम् ॥ २ ॥ ८।३८।२
१०७५ इदं वां मदिरं मध्वधुक्षन्नद्रिभिर्नरः ।
इन्द्राग्नी तस्य बोधतम् ॥ ३ ॥( धा० ८ । उ० १ । स्व० २ )॥१०॥(दा)८।३८।३

॥ इति तृतीयः खण्डः ॥ ३ ॥

१०७६ इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः ।
अर्कस्य योनिमासदम् ॥ १ ॥ ९।६४।२२ ४७२
१०७७ तं त्वा विप्रा वचोविदः परिष्कृण्वन्ति धर्णसिम् ।
सं त्वा मृजन्त्यायवः ॥ २ ॥ ९।६४।२३
१०७८ रसं ते मित्रो अर्यमा पिबन्तु वरुणः कवे ।
पवमानस्य मरुतः ॥ ३ ॥ (धा० १४ । उ० नास्ति । स्व० १) ॥ ११(ल) ॥ ९।६४।२४
१०७९ मृज्यमानः सुहस्त्या समुद्रे वाचमिन्वसि ।
रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥ १ ॥ ९।१०७।२१ ५१७
१०८० पुनानो वारे पवमानो अव्यये वृषो अचिक्रदद्वने ।
देवानां सोम पवमान निष्कृतं गोभिरञ्जानो अर्षसि ॥ २ ॥ १२(ति) ॥
(धा० २४ । उ० १ । स्व० ३ ) ९।१०७।२२

(ऋग्वेदे) (सामवेदे)

१०८१ एतमु त्यं दश क्षिपो मृजन्ति सिन्धुमातरम् ।
समादित्येभिरख्यत ॥ १ ॥ ९।६१।७

१०८२ समिन्द्रेणोत वायुना सुत एति पवित्र आ ।
सं सूर्यस्य रश्मिभिः ॥ २ ॥ ९।६१।८

१०८३ स नो भगाय वायवे पूष्णे पवस्व मधुमान् ।
चारुर्मित्रे वरुणे च ॥ ३ ॥ ( धा० ८ । उ० १ । स्व० ३ ) ॥१३ (दि) ॥ ९।६१।९

॥ इति चतुर्थः खण्डः ॥ ४ ॥

१०८४ रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः ।
क्षुमन्तो याभिर्मदेम ॥ १ ॥ १।३०।१३ १५३

१०८५ आ घ त्वावान् त्मना युक्तः स्तोतृभ्यो धृष्णवीयानः ।
ऋणोरक्षं न चक्र्योः ॥ २ ॥ १।३०।१४

१०८६ आ यद् दुवः शतक्रतवा कामं जरितॄणाम् ।
ऋणोरक्षं न शचीभिः ॥ ३ ॥ ( धा० १८ । उ० २ । स्व० ४ ) ॥१४ (ठी)॥ १।३०।१५

१०८७ सुरूपकृत्नुमूतये सुदुघामिव गोदुहे ।
जुहूमसि द्यविद्यवि ॥ १ ॥ १।४।१ १६०

१०८८ उप नः सवना गहि सोमस्य सोमपाः पिब ।
गोदा इद्रेवतो मदः ॥ २ ॥ १।४।२

१०८९ अथा ते अन्तमानां विद्याम सुमतीनाम् ।
मा नो अति ख्य आ गहि ॥ ३ ॥ (धा० ११ । उ० १ ।। स्व० नास्ति ) ॥१५(कौ)॥ १।४।३

१०९० उभे यदिन्द्र रोदसी आपप्राथोषा इव ।
महान्तं त्वा महीनां सम्राजं चर्षणीनाम् ।
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ १ ॥ १०।१३४।१ २७९

(ऋग्वेदे) (सामवेदे)

१०९१ दीर्घं ह्यङ्कुशं यथा शक्तिं बिभर्षि मन्तुमः।
पूर्वेण मघवन्पदा वयामजो यथा यमः।
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ २ ॥ १०।१३४।६

१०९२ अव स्म दुर्हृणायतो मर्तस्य तनुहि स्थिरम्।
अधस्पदं तमीं कृधि यो अस्माँ अभिदासति।
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ ३ ॥१६(यौ)॥ १०।१३४।२

॥ इति पञ्चमः खण्डः ॥ ५ ॥ ( धा० ४२। उ० नास्ति। स्व० १० )

१०९३ परि स्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत्।
मदेषु सर्वधा असि ॥ १ ॥ ९।१८।१ ४७५

१०९४ त्वं विप्रस्त्वं कविर्मधु प्र जातमन्धसः।
मदेषु सर्वधा असि ॥ २ ॥ ९।१८।२

१०९५ त्वे विश्वे सजोषसो देवासः पीतिमाशत।
मदेषु सर्वधा असि ॥ ३ ॥ ( धा० ११। उ० २। स्व० २ ) ॥ १७(खा)॥ ९।१८।३

१०९६ स सुन्वे यो वसूनां यो रायामानेता य इडानाम्।
सोमो यः सुक्षितीनाम् ॥ १ ॥ ९।१०८।१३ ५८२

१०९७ यस्य त इन्द्रः पिबाद्यस्य मरुतो यस्य वार्यमणा भगः।
आ येन मित्रावरुणा करामह एन्द्रमवसे महे ॥२॥ ॥१८(ली)॥ ९।१०८।१४
( धा० ९। उ० नास्ति। स्व० ४ )

१०९८ तं वः सखायो मदाय पुनानमभि गायत।
शिशुं न हव्यैः स्वदयन्त गूर्तिभिः ॥ १ ॥ ९।१०५।१ ५६९

१०९९ सं वत्स इव मातृभिरिन्दुर्हिन्वानो अज्यते।
देवावीर्मदो मतिभिः परिष्कृतः ॥ २ ॥ ९।१०५।२

११०० अयं दक्षाय साधनोऽयं शर्धाय वीतये।
अयं देवेभ्यो मधुमत्तरः सुतः ॥ ३ ॥ ॥ १९(यि) ॥ ९।१०५।३
( धा० [illegible] नास्ति। स्व० ३ )

(ऋग्वेदे) (सामवेदे)

११०१ सोमाः पवन्त इन्दवोऽस्मभ्यं गातुवित्तमाः ।
मित्राः स्वाना अरेपसः स्वाध्यः स्वर्विदः ॥ १ ॥ ९।१०१।१० ५४८

११०२ ते पूतासो विपश्चितः सोमासो दध्याशिरः ।
सूरासो न दर्शतासो जिगत्नवो ध्रुवा घृते ॥ २ ॥ ९।१०१।१२

११०३ सुष्वाणासो व्यद्रिभिश्चिताना गोरधि त्वचि ।
इषमस्मभ्यमभितः समस्वरन्वसुविदः ॥ ३ ॥॥ २०(वा) ॥ ९।१०१।११
( धा० १० । उ० नास्ति । स्व० २ )

११०४ अया पवा पवस्वैना वसूनि मांश्चत्व इन्दो सरसि प्र धन्व ।
ब्रध्नश्चिद्यस्य वातो न जूतिं पुरुमेधाश्चित्तकवे नरं धात् ॥ १ ॥ ९।९७।५२ ५४१

११०५ उत न एना पवया पवस्वाधि श्रुते श्रवाय्यस्य तीर्थे ।
षष्टिं सहस्रा नैगुतो वसूनि वृक्षं न पक्वं धूनवद्रणाय ॥ २ ॥ ९।९७।५३

११०६ महीमे अस्य वृष नाम शूषे मांश्चत्वे वा पृशने वा वधत्रे ।
अस्वापयन्निगुतः स्नेहयच्चापामित्राँ अपाचितो अचेतः ॥३॥ २१(कि)॥
(धा० १६ । उ० १ । स्व० ३ । ) ९।९७।५४

॥ इति षष्ठः खण्डः ॥६॥

११०७ अग्ने त्वं नो अन्तम उत त्राता शिवो भुवो वरूथ्यः ॥ १ ॥ ५।२४।१ ४४८

११०८ वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमो रयिं दाः ॥ २ ॥ ५।२४।२

११०९ तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥३॥२२(वा)॥
( धा० १५ । उ० नास्ति । स्व० २ ) ५।२४।४

१११० इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः ॥ १ ॥ १०।१५७।१ ४५२

११११ यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह सीषधातु ॥२॥ १०।१५७।२

१११२ आदित्यैरिन्द्रः सगणो मरुद्भिरस्मभ्यं भेषजा करत ॥३॥२३(छा)॥
( धा० १२ । उ० २ । स्व० २ ) १०।१५७।३

१११३-१५ प्र वोऽर्चोप ॥२४॥ (ऋग्वेदे) (सामवेदे)

[१११३ प्र व इन्द्राय वृत्रहन्तमाय विप्राय गाथं गायता यं जुजोषते ॥१॥](न ऋग्वेदीयः)४४६

[१११४ अर्चन्त्यर्कं मरुतः स्वर्का आ स्तोभति श्रुतो युवा स इन्द्रः ॥२॥](न ऋग्वेदीयः)४४५

[१११५ उप प्रक्षे मधुमति क्षियन्तः पुष्येम रयिं धीमहे त इन्द्र ॥३॥ २४(य)॥ ]

( धा० २ । उ० नास्ति । स्व० १ ) ( न ऋग्वेदीयः ) ४४४

इति सप्तमः खण्डः ॥ ७ ॥ इति चतुर्थप्रपाठकस्य प्रथमोऽर्धः ॥ ७ ॥ इति सप्तमोऽध्यायः ॥ ७ ॥

# अथाष्टमोऽध्यायः ।

## [ २ ]

अथ चतुर्थप्रपाठकस्य द्वितीयोऽर्धः ॥ ४ ॥

( १-१४ ) १ ( १-३ ) वृषगणो वासिष्ठः; १ ( ४-१२ ), २ ( १-९ ) असितः काश्यपो देवलो वा, २ ( १०-१२ ), ११ भृगुर्वारुणिर्जमदग्निर्भार्गवो वा; ३, ६ भरद्वाजो बार्हस्पत्यः; ४ यजत आत्रेयः; ५ मधुच्छन्दा वैश्वामित्रः; ७ सिकता निवावरी; ८ पुरुहन्मा आंगिरसः; ९ पर्वतनारदौ काण्वौ शिखण्डिन्यावप्सरसौ काश्यपौ वा; १० अग्नये धिष्ण्यो ऐश्वराः १२ वत्सः काण्वः; १३ नृमेध आंगिरसः; १४ अत्रिर्भौमः ॥ १-२, ७, ९-११ पवमानः सोमः; ३, १२ अग्निः; ४ मित्रावरुणौ; ५, ८, १३-१४ इन्द्रः; ६ इन्द्राग्नी ॥ ( १-३, ), ३ त्रिष्टुप्; १ (४-१२), २, ४-६, ११-१२ गायत्री; ७ जगती; ८ प्रगाथः=( विषमा बृहती, समा सतो बृहती ); ९ उष्णिक्; १० द्विपदा विराट्; १३ (१-२) ककुप्, १३ ( ३ ) पुर उष्णिक्; १४ अनुष्टुप् ॥

१११६ प्र काव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति ।
महिव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन् ॥१॥ ९।९७।७ ५२४

१११७ प्र हंसासस्तृपला वग्नुमच्छामादस्तं वृषगणा अयासुः ।
अङ्गोषिणं पवमानं सखायो दुर्मर्षं वाणं प्र वदन्ति साकम् ॥२॥ ९।९७।८

१११८ स योजत उरुगायस्य जूतिं वृथा क्रीडन्तं मिमते न गावः ।
परीणसं कृणुते तिग्मशृङ्गो दिवा हरिर्ददृशे नक्तमृज्रः ॥३॥ ९।९७।९

१११९ प्र स्वानासो रथा इवार्वन्तो न श्रवस्यवः ।
सोमासो राये अक्रमुः ॥४॥ ९।१०।१

(ऋग्वेदे )(सामवेदे)

११२० हिन्वानासो रथा इव दधन्विरे गभस्त्योः ।
भरासः कारिणामिव ॥५॥ ९।१०।२

११२१ राजानो न प्रशस्तिभिः सोमासो गोभिरञ्जते ।
यज्ञो न सप्त धातृभिः ॥६॥ ९।१०।३

११२२ परि स्वानास इन्दवो मदाय बर्हणा गिरा ।
मधो अर्षन्ति धारया ॥७॥ ९।१०।४

११२३ आपानासो विवस्वतो जिन्वन्त उषसो भगम् ।
सूरा अण्वं वि तन्वते ॥ ८ ॥ ९।१०।५

११२४ अप द्वारा मतीनां प्रत्ना ऋण्वन्ति कारवः ।
वृष्णो हरस आयवः ॥ ९ ॥ ९।१०।६

११२५ समीचीनास आशत होतारः सप्तजानयः ।
पदमेकस्य पिप्रतः ॥१०॥ ९।१०।७

११२६ नाभा नाभिं न आ ददे चक्षुषा सूर्यं दृशे ।
कवेरपत्यमा दुहे ॥११॥ ९।१०।८

११२७ अभि प्रियं दिवस्पदमध्वर्युभिर्गुहा हितम् ।
सूरः पश्यति चक्षसा ॥१२॥ (धा० ५७ । उ० ४ । स्व० ८) ॥ १(झै)॥ ९।१०।९

॥ इति प्रथमः खण्डः ॥१॥

११२८ असृग्रमिन्दवः पथा धर्मन्नृतस्य सुश्रियः ।
विदाना अस्य योजना ॥ १ ॥ ९।७।१

११२९ प्र धारा मधो अग्रियो महीरपो वि गाहते ।
हविर्हविःषु वन्द्यः ॥ २ ॥ ९।७।२

११३० प्र युजा वाचो अग्रियो वृषो अचिक्रदद्वने ।
सद्माभि सत्यो अध्वरः ॥ ३ ॥ ९।७।३

(ऋग्वेदे) (सामवेदे)

११३१ परि यत्काव्या कविर्नृम्णा पुनानो अर्षति।
स्ववाजी सिषासति ॥ ४ ॥ ९।७।४

११३२ पवमानो अभि स्पृधो विशो राजेव सीदति।
यदीमृण्वन्ति वेधसः ॥ ५ ॥ ९।७।५

११३३ अव्या वारे परि प्रियो हरिर्वनेषु सीदति।
रेभो वनुष्यते मती ॥ ६ ॥ ९।७।६

११३४ स वायुमिन्द्रमश्विना साकं मदेन गच्छति।
रणा यो अस्य धर्मणा ॥ ७ ॥ ९।७।७

११३५ आ मित्रे वरुणे भगे मधोः पवन्त ऊर्मयः।
विदाना अस्य शक्मभिः ॥ ८ ॥ ९।७।८

११३६ अस्मभ्यं रोदसी रयिं मध्वो वाजस्य सातये।
श्रवो वसूनि सञ्जितम् ॥ ९ ॥ ९।७।९

११३७ आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे।
पान्तमा पुरुस्पृहम् ॥१०॥ ९।६५।२८

११३८ आ मन्द्रमा वरेण्यमा विप्रमा मनीषिणम्।
पान्तमा पुरुस्पृहम् ॥११॥ ९।६५।२९

११३९ आ रयिमा सुचेतुनमा सुक्रतो तनूष्वा।
पान्तमा पुरुस्पृहम् ॥१२॥ ( धा० ३८। उ० ५। स्व० ११) ॥२ (ण)॥ ९।६५।३०

॥ इति द्वितीयः खण्डः ॥२॥

११४० मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्।
कविं सम्राजमतिथिं जनानामासन्नः पात्रं जनयन्त देवाः ॥१॥ ६।७।१ ६७

११४१ त्वां विश्वे अमृत जायमानं शिशुं न देवा अभि सं नवन्ते।
तव क्रतुभिरमृतत्वमायन् वैश्वानर यत्पित्रोरदीदेः ॥ २ ॥ ६।७।४

११४२ नाभिं यज्ञानां सदनं रयीणां महामाहावमभि सं नवन्त । (ऋग्वेदे) सामवेदे)
वैश्वानरं रथ्यमध्वराणां यज्ञस्य केतुं जनयन्त देवाः ॥३(कु ॥ ६।७।२
( धा० २६ । उ० १ । स्व० ५ )

११४३ प्र वो मित्राय गायत वरुणाय विपा गिरा ।
महिक्षत्रावृतं बृहत् ॥ १ ॥ ५।६८।१

११४४ सम्राजा या घृतयोनी मित्रश्चोभा वरुणश्च ।
देवा देवेषु प्रशस्ता ॥ २ ॥ ५।६८।२

११४५ ता नः शक्तं पार्थिवस्य महो रायो दिव्यस्य ।
महि वां क्षत्रं देवेषु ॥३॥(धा० १३ । उ० नास्ति । स्व० १ ) ॥४(र)॥ ५।६८।३ १४६५

११४६ इन्द्रा याहि चित्रभानो सुता इमे त्वायवः ।
अण्वीभिस्तना पूतासः ॥ १ ॥ १।३।४

११४७ इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः ।
उप ब्रह्माणि वाघतः ॥२॥ १।३।५

११४८ इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः ।
सुते दधिष्व नश्चनः ॥३॥ ( धा० १६ । उ० नास्ति । स्व० ४) ॥५ (ही)॥ १।३।६

११४९ तमीडिष्व यो आर्चिषा वना विश्वा परिष्वजत् ।
कृष्णा कृणोति जिह्वया ॥१॥ ६।६०।१०

११५० य इद्ध आविवासति सुम्नमिन्द्रस्य मर्त्यः ।
द्युम्नाय सुतरा अपः ॥२॥ ६।६०।११

११५१ ता नो वाजवतीरिष आशून् पिपृतमर्वतः ।
एन्द्रमग्निं च वोढवे ॥३॥ ( धा० ७ ।उ० नास्ति । स्व० १ ) ॥६(य)॥ ६।६०।१२

॥इति तृतीयः खण्डः ॥३॥

११५२ प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतं सखा सख्युर्न प्र मिनाति सङ्गिरम् ।
मर्य इव युवतिभिः समर्षति सोमः कलशे शतयामना पथा ॥ ॥ ९।८६।१६ ५।५७

(ऋग्वेदे) (सामवेदे)

११५३ प्र वो धियो मन्द्रयुवो विपन्युवः पनस्युवः संवरणेष्वक्रमुः ।
हरिं क्रीडन्तमभ्यनूषत स्तुभोऽभि धेनवः पयसेदशिश्रयुः ॥२॥ ९।८६।१७

११५४ आ नः सोम संयतं पिप्युषीमिषमिन्दो पवस्व पवमान ऊर्मिणा ।
या नो दोहते त्रिरहन्नसश्चुषी क्षुमद्वाजवन्मधुमत्सुवीर्यम् ॥३॥ ॥७(ठि)॥
( धा० २८ । उ० २ । स्व० ३ ) ९।८६।१८

११५५ न किष्टं कर्मणा नशद्यश्चकार सदावृधम् ।
इन्द्रं न यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्णुमोजसा ॥१॥ ८।७०।३ २४३

११५६ अषाढमुग्रं पृतनासु सासहिं यस्मिन्महीरुरुज्रयः ।
सं धेनवो जायमाने अनोनवुर्द्यावः क्षामीरनोनवुः ॥२॥ ॥८(ही)॥ ८।७०।४
(धा० १६ । उ० नास्ति । स्व० ४)

॥ इति चतुर्थः खण्डः ॥ ४ ॥

११५७ सखाय आ नि षीदत पुनानाय प्रगायत ।
शिशुं नः यज्ञैः परि भूषत श्रिये ॥ १ ॥ ९।१०४।१ ५६८

११५८ समी वत्सं न मातृभिः सृजता गयसाधनम् ।
देवाव्यं३मदमभि द्विशवसम् ॥ २ ॥ ९।१०४।२

११५९ पुनाता दक्षसाधनं यथा शर्धाय वीतये ।
यथा मित्राय वरुणाय शन्तमम् ॥ ३ ॥ ॥ ९(पि) ॥ ९।१०४।३
( धा० १५ । उ० १ । स्व० ३ )

११६० प्र वाज्यक्षाः सहस्रधारस्तिरः पवित्रं वि वारमव्यम् ॥१॥ ९।१०९।१६

११६१ स वाज्यक्षाः सहस्ररेता अद्भिर्मृजानो गोभिः श्रीणानः ॥२॥ ९।१०९।१७

११६२ प्र सोम याहीन्द्रस्य कुक्षा नृभिर्येमानो अद्रिभिः सुतः ॥३॥ ॥१०(पु)॥
( धा० १५। उ० १। स्व० ५। ) ९।१०९।१८

११६३ ये सोमासः परावति ये अर्वावति सुन्विरे ।
ये वादः शर्यणावति ॥१॥
९।६५।२२

११६४ य आर्जीकेषु कृत्वसु ये मध्ये पस्त्यानाम् ।    (ऋग्वेदे)    (सामवेदे)
ये वा जनेषु पञ्चसु ॥ २ ॥    ९।६५।२३
११६५ ते नो वृष्टिं दिवस्परि पवन्तामा सुवीर्यम् ।
स्वाना देवास इन्दवः ॥३॥ (धा० ७। उ० १। स्व० ३।) ॥ (चि)॥ ९।६५।२४

॥ इति पञ्चमः खण्डः ॥ ५ ॥

११६६ आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात् ।
अग्ने त्वां कामये गिरा ॥१॥    ८।११।७    ८
११६७ पुरुत्रा हि सदृङ्ङसि दिशो विश्वा अनु प्रभुः ।
समत्सु त्वा हवामहे ॥२॥    ८।११।८
११६८ समत्स्वग्निमवसे वाजयन्तो हवामहे ।
वाजेषु चित्रराधसम् ॥३॥ (धा० १३। उ० २। स्व० २) ॥१२ (ठा)॥ ८।११।९
११६९ त्वं न इन्द्रा भर ओजो नृम्णं शतक्रतो विचर्षणे ।
आ वीरं पृतनासहम् ॥१॥    ८।९८।१०    ४०५
११७० त्वं हि नः पिता वसो त्वं माता शतक्रतो बभूविथ ।
अथा ते सुम्नमीमहे ॥२॥    ८।९८।११
११७१ त्वां शुष्मिन्पुरुहूत वाजयन्तमुप ब्रुवे सहस्कृत ।
स नो रास्व सुवीर्यम् ॥३॥ (धा० १४। उ० ना०। स्व० १) ॥१३॥(ल)॥ ८।९८।१२
११७२ यदिन्द्र चित्र म इह नास्ति त्वादातमद्रिवः ।
राधस्तन्नो विदद्वस उभयाहस्त्या भर ॥१॥    ५।३९।१    ३४५
११७३ यन्मन्यसे वरेण्यमिन्द्र द्युक्षं तदा भर ।
विद्याम तस्य ते वयमकूपारस्य दावनः ॥२॥    ५।३९।२

(ऋग्वेदे) (सामवेदे)

११७४ यत्ते दिक्षु प्रराध्यं मनो अस्ति श्रुतं बृहत्।
तेन दृढा चिदद्रिव आ वाजं दर्षि सातये ॥३॥ ॥१४(पी)॥ ५।३९।२
( धा० २५ । उ० १ । स्व० ४ )

॥ इति षष्ठः खण्डः ॥ ६ ॥

इति चतुर्थप्रपाठके द्वितीयोऽर्धः ॥२॥ चतुर्थप्रपाठकश्च समाप्तः ॥ ४ ॥
॥ इति अष्टमोऽध्याय ॥ ८ ॥

# अथ नवमोऽध्यायः।

## [ १ ]

अथ पञ्चमप्रपाठके प्रथमोऽध्यायः ॥५॥

( १-२० ) १ प्रतर्दनो दैवोदासिः; २, ३, ४ असितः काश्यपो देवलो वा; ५, ११ उचथ्य आंगिरसः; ६, ७ अमहीयुराङ्गिरसः; ८, १५ निध्रुविः काश्यपः; ९ वसिष्ठो मैत्रावरुणिः; १० सुकक्ष आंगिरसः; १२ कविर्भार्गवः; १३ देवातिथिः काण्वः; १४ भर्गः प्रागाथः; १६ अम्बरीषो वार्षागिरः ऋजिश्वा भारद्वाजश्च; १७ अग्नये धिष्ण्या ऐश्वराः; १८ उशना काव्यः; १९ नृमेध आंगिरसः; २० जेता माधुच्छन्दसः॥ १-८, ११-१२, १५-१७ पवमानः सोमः; ९, १८ अग्निः; १०, १३, १४, १९-२० इन्द्रः ॥ १-९ त्रिष्टुप्; २-८,१०-११, १५, १८ गायत्री; १२ जगती १३,१४ प्रगाथः= ( विषमा बृहती, समा सतोबृहती ); १६, २० अनुष्टुप्; १७ द्विपदा विराट्; १९ उष्णिक् ॥

११७५ शिशुं जज्ञानं हर्यतं मृजन्ति शुम्भन्ति विप्रं मरुतो गणेन।
कविर्गीर्भिः काव्येना कविः सन्त्सोमः पवित्रमत्येति रेभन् ॥१॥ ९।९६।१७
११७६ ऋषिमना य ऋषिकृत्स्वर्षाः सहस्रनीथः पदवीः कवीनाम्।
तृतीयं धाम महिषः सिषासन्त्सोमो विराजमनु राजति ष्टुप् ॥२॥ ९।९६।१८
११७७ चमूषच्छ्येनः शकुनो विभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रत्।
अपामूर्मिं सचमानः समुद्रं तुरीयं धाम महिषो विवक्ति ॥३॥ १(लु)॥
(धा० २४ । उ० ना० । स्व० ५।) ९।९६।१९

११७८ एते सोमा अभि प्रियमिन्द्रस्य काममक्षरन्।
वर्धन्तो अस्य वीर्यम् ॥१॥ ९।८।१

११७९ पुनानासश्चमूषदो गच्छन्तो वायुमश्विना। (ऋग्वेदे) (सामवेदे)

तेनो धत्त सुवीर्यम् ॥२॥ ९।८।२

११८० इन्द्रस्य सोम राधसे पुनानो हार्दि चोदय।

देवानां योनिमासदम् ॥३॥ ९।८।३

११८१ मृजन्ति त्वा दश क्षिपो हिन्वन्ति सप्त धीतयः।

अनु विप्रा अमादिषुः ॥४॥ ९।८।४

११८२ देवेभ्यस्त्वा मदाय कं सृजानमति मेष्यः।

सं गोभिर्वासयामसि ॥५॥ ९।८।५

११८३ पुनानः कलशेष्वा वस्त्राण्यरुषो हरिः।

परि गव्यान्यव्यत ॥६॥ ९।८।६

११८४ मघोन आ पवस्व नो जहि विश्वा अप द्विषः।

इन्दो सखायमा विश ॥ ७ ॥ ९।८।७

११८५ नृचक्षसं त्वा वयमिन्द्रपीतं स्वर्विदम्।

भक्षीमहि प्रजामिषम् ॥ ८ ॥ ९।८।९

११८६ वृष्टिं दिवः परि स्रव द्युम्नं पृथिव्या अधि।

सहो नः सोम पृत्सु धाः॥९॥(धा० ३९। उ० १। स्व० १३) ॥(ति)२॥ ९।८।८

॥ इति प्रथमः खण्डः ॥ १ ॥

११८७ सोमः पुनानो अर्षति सहस्रधारो अत्यविः।

वायोरिन्द्रस्य निष्कृतम् ॥ १ ॥ ९।१३।१

११८८ पवमानमवस्यवो विप्रमभि प्र गायत।

सुष्वाणं देववीतये ॥ २ ॥ ९।१३।२

११८९ पवन्ते वाजसातये सोमाः सहस्रपाजसः।

गृणाना देववीतये ॥ ३ ॥ ९।१३।३

११९० उत नो वाजसातये पवस्व बृहतीरिषः।

द्युमदिन्दो सुवीर्यम् ॥ ४ ॥ ९।१३।४

(ऋग्वेदे) (सामवेदे)

११९१ अत्या हियाना न हेतृभिरसृग्रं वाजसातये ।
वि वारमव्यमाशवः ॥ ५ ॥ ९।१३।६

११९२ ते नः सहस्रिणं रयिं पवन्तामा सुवीर्यम् ।
स्वाना देवास इन्दवः ॥ ६ ॥ ९।१३।५

११९३ वाश्रा अर्षन्तीन्दवोऽभि वत्सं न मातरः ।
दधन्विरे गभस्त्योः ॥ ७ ॥ ९।१३।७

११९४ जुष्ट इन्द्राय मत्सरः पवमानः कनिक्रदत् ।
विश्वा अप द्विषो जहि ॥ ८ ॥ ९।१३।८

११९५ अपघ्नन्तो अराव्णः पवमानाः स्वर्दृशः ।
योनावृतस्य सीदत ॥ ९ ॥ (धा० ३९ । उ० ३ । स्व० ६) ॥ (दू) ३॥ ९।१३।९

॥ इति द्वितीयः खण्डः ॥२॥

११९६ सोमा असृग्रमिन्दवः सुता ऋतस्य धारया ।
इन्द्राय मधुमत्तमाः ॥ १ ॥ ९।१२।१

११९७ अभि विप्रा अनूषत गावो वत्सं न धेनवः ।
इन्द्रं सोमस्य पीतये ॥ २ ॥ ९।१२।२

११९८ मदच्युत्क्षेति सादने सिन्धोरूर्मा विपश्चित् ।
सोमो गौरी अधि श्रितः ॥ ३ ॥ ९।१२।३

११९९ दिवो नाभा विचक्षणोऽव्यो वारे महीयते ।
सोमो यः सुक्रतुः कविः ॥ ४ ॥ ९।१२।४

१२०० यः सोमः कलशेष्वा अन्तः पवित्र आहितः ।
तमिन्दुः परि षस्वजे ॥ ५ ॥ ९।१२।५

१२०१ प्र वाचमिन्दुरिष्यति समुद्रस्याधि विष्टपि ।
जिन्वन्कोशं मधुश्चुतम् ॥ ६ ॥ ९।१२।६

(ऋग्वेदे) (सामवेदे)

१२०२ नित्यस्तोत्रो वनस्पतिर्धेनामन्तः सबर्दुघाम् ।
हिन्वानो मानुषा युजा ॥ ७ ॥ ९।१२।७

१२०३ आ पवमान धारया रयिं सहस्रवर्चसम् ।
अस्मे इन्दो स्वाभुवम् ॥ ८ ॥ ९।१२।९

१२०४ अभि प्रिया दिवः कविर्विप्रः स धारया सुतः ।
सोमो हिन्वे परावति ॥ ९ ॥ ( धा० ४० । उ० ४ । स्व० ७) ॥ ४ (मे) ॥ ९।१२।८

॥ इति तृतीयः खण्डः ॥३॥

१२०५ उत्ते शुष्मास ईरते सिन्धोरूर्मेरिव स्वनः ।
वाणस्य चोदया पविम् ॥ १ ॥ ९।५०।१

१२०६ प्रसवे त उदीरते तिस्रो वाचो मखस्युवः ।
यदव्य एषि सानवि ॥ २ ॥ ९।५०।२

१२०७ अव्या वारैः परि प्रियं हरिं हिन्वन्त्यद्रिभिः ।
पवमानं मधुश्चुतम् ॥ ३ ॥ ९।५०।३

१२०८ आ पवस्व मदिन्तम पवित्रं धारया कवे ।
अर्कस्य योनिमासदम् ॥ ४ ॥ ९।५०।४

१२०९ स पवस्व मदिन्तम गोभिरञ्जानो अक्तुभिः ।
एन्द्रस्य जठरं विश ॥ ५ ॥ (धा० ३१ । उ० १ । स्व० २) ॥ ५ (का) ॥ ९।५०।५

॥ इति चतुर्थ खण्डः ॥४॥

१२१० अया वीती परि स्रव यस्त इन्दो मदेष्वा ।
अवाहन्नवतीर्नव ॥ १ ॥ ९।६१।१ ४९५

१२११ पुरः सद्य इत्थाधिये दिवोदासाय शंबरम् ।
अध त्यं तुर्वशं यदुम् ॥ २ ॥ ९।६१।२

१२१२ परि णो अश्वमश्वविद्गोमदिन्दो हिरण्यवत् ।
क्षरा सहस्रिणीरिषः ॥३॥ (धा० ११ । उ० नास्ति । स्व० ३) ॥६(हि)॥ ९।६१।३

(ऋग्वेदे) (सामवेदे)

१२१३ अपघ्नन्पवते मृधोऽप सोमो अराव्णः।
गच्छन्निन्द्रस्य निष्कृतम् ॥ १ ॥ ९।६१।२५

१२१४ महो नो राय आ भर पवमान जही मृधः।
रास्वेन्दो वीरवद्यशः ॥ २ ॥ ९।६१।२६

१२१५ न त्वा शतं च न ह्रुतो राधो दित्सन्तमा मिनन्।
यत्पुनानो मखस्यसे ॥ ३ ॥ (धा० ११। उ० २। स्व० २) ॥७(खा)॥ ९।६१।२७

१२१६ अया पवस्व धारया यया सूर्यमरोचयः।
हिन्वानो मानुषीरपः ॥ १ ॥ ९।६३।७ ४९३

१२१७ अयुक्त सूर एतशं पवमानो मनावधि।
अन्तरिक्षेण यातवे ॥ २ ॥ ९।६३।८

१२१८ उत त्या हरितो रथे सूरो अयुक्त यातवे।
इन्दुरिन्द्र इति ब्रुवन् ॥ ३ ॥ (धा० ११। उ० १। स्व० २) ॥ ८(का)॥ ९।६३।९

॥ इति पञ्चमः खण्डः॥५॥

१२१९ अग्निं वो देवमग्निभिः सजोषा यजिष्ठं दूतमध्वरे कृणुध्वम्।
यो मर्त्येषु निध्रुविर्ऋतावा तपुर्मूर्धा घृतान्नः पावकः ॥ १ ॥ ७।३।१

१२२० प्रोथदश्वो न यवसेऽविष्यन्यदा महः संवरणाद्व्यस्थात्।
आदस्य वातो अनु वाति शोचिरध स्म ते व्रजनं कृष्णमस्ति ॥२॥ ७।३।२

१२२१ उद्यस्य ते नवजातस्य वृष्णोऽग्ने चरन्त्यजरा इधानाः।
अच्छा द्यामरुषो धूम एषि सं दूतो अग्न ईयसे हि देवान् ॥३॥९(टी)॥
(धा० १८। उ० १। स्व० ४) ७।३।३

१२२२ तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे।
स वृषा वृषभो भुवत् ॥ १ ॥ ८।९३।७ ११९

१२२३ इन्द्रः स दामने कृत ओजिष्ठः स बले हितः।
द्युम्नी श्लोकी स सोम्यः ॥ २ ॥ ८।९३।८

( ऋग्वेदे )( सामवेदे )

१२२४ गिरा वज्रो न सम्भृतः सबलो अनपच्युतः ।
ववक्ष उग्रो अस्तृतः ॥ ३ ॥ (धा० १७। उ० २। स्व० ७) ॥१०(छे)॥ ८।९३।९

॥ इति षष्ठः खण्डः ॥ ६ ॥

१२२५ अध्वर्यो अद्रिभिः सुतं सोमं पवित्र आ नय ।
पुनाहीन्द्राय पातवे ॥ १ ॥ ९।५१।१ ४९९
१२२६ तव त्य इन्दो अन्धसो देवा मधोर्व्याशत ।
पवमानस्य मरुतः ॥ २ ॥ ९।५१।३
१२२७ दिवः पीयूषमुत्तमं सोममिन्द्राय वज्रिणे ।
सुनोता मधुमत्तमम् ॥ ३ ॥ ( धा० ११। उ० २। स्व० २ ) ॥११(खा)॥ ९।५१।२

१२२८ धर्ता दिवः पवते कृत्व्यो रसो दक्षो देवानामनुमाद्यो नृभिः ।
हरिः सृजानो अत्यो न सत्वभिर्वृथा पाजांसि कृणुषे नदीष्वा ॥१॥ ९।७६।१ ५५८
१२२९ शूरो न धत्त आयुधा गभस्त्योः स्वऽः सिषासन्रथिरो गविष्टिषु ।
इन्द्रस्य शुष्ममीरयन्नपस्युभिरिन्दुर्हिन्वानो अज्यते मनीषिभिः ॥२॥ ९।७६।२
१२३० इन्द्रस्य सोम पवमान ऊर्मिणा तविष्यमाणो जठरेष्वा विश ।
प्र नः पिन्व विद्युदभ्रेव रोदसी धिया नो वाजाँ उप माहि शश्वतः॥३॥१२(चा)॥
( धा० २७। उ० १। स्व० २ ) ९।७६।३

१२३१ यदिन्द्र प्रागपागुदङ्न्यग्वा हूयसे नृभिः ।
सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे ॥१॥ ८।४।१
१२३२ यद्वा रुमे रुशमे श्यावके कृप इन्द्र मादयसे सचा ।
कण्वासस्त्वा स्तोमेभिर्ब्रह्मवाहस इन्द्रा यच्छन्त्या गहि ॥२॥१३(कि)॥
( धा० ११। उ० १। स्व० ३ ) ८।४।२

१२३३ उभयं शृणवच्च न इन्द्रो अर्वागिदं वचः ।
सत्राच्या मघवान्त्सोमपीतये धिया शविष्ठ आ गमत् ॥१॥ ८।६१।१ २९०

(सामवेदे)(ऋग्वेदे)

१२३४ तं हि स्वराजं वृषभं तमोजसा धिषणे निष्टतक्षतुः ।
उतोपमानां प्रथमो नि षीदसि सोमकामं हि ते मनः ॥२॥१४(ची)॥
( धा० १७ । उ० १ । स्व० ४ । ) ८।६।१२

॥ इति सप्तमः खण्डः ॥७॥

१२३५ पवस्व देव आयुषगिन्द्रं गच्छतु ते मदः ।
वायुमा रोह धर्मणा ॥ १ ॥ ९।६३।२२ ४८३

१२३६ पवमान नि तोशसे रयिं सोम श्रवाय्यम् ।
इन्दो समुद्रमा विश ॥ २ ॥ ९।६३।२३

१२३७ अपघ्नन्पवसे मृधः [ क्रतुवित्सोम मत्सरः ।
नुदस्वादेवयु जनम् ] ॥ ३ ॥ (धा० १४ । उ० नास्ति । स्व० ३)॥१५(लि)॥९।६३।२४ ४९२

१२३८ अभी नो वाजसातमं [ रयिमर्ष शतस्पृहम् ।
इन्दो सहस्रभर्णसं तुविद्युम्नं विभासहम् ] ॥ १ ॥ ९।९८।१ ५४९

१२३९ वयं ते अस्य राधसो वसोर्वसो पुरुस्पृहः ।
नि नेदिष्ठतमा इषः स्याम सम्ने ते अध्रिगो ॥ २ ॥ ९।९८।५

१२४० परि स्य स्वानो अक्षरदिन्दुरव्ये मदच्युतः ।
धारा य ऊर्ध्वो अध्वरे भ्राजा न याति गव्ययुः ॥ ३ ॥१६(ली)॥ ९।९८।३
( धा० १४ । उ० नास्ति । स्व० ४ )

१२४१ पवस्व सोम महान्त्समुद्रः पिता देवानां विश्वाभि धाम ॥ १ ॥ ९।१०९।४ ४२९

१२४२ शुक्रः पवस्व देवेभ्यः सोम दिवे पृथिव्यै शं च प्रजाभ्यः॥ २॥ ९।१०९।५

१२४३ दिवो धर्तासि शुक्रः पीयूषः सत्ये विधर्मन्वाजी पवस्व ॥ ३ ॥ १७ (हि)॥
(धा० ११ । उ० नास्ति । स्व० ३) ९।१०९।६

॥ इत्यष्टमः खण्डः ॥ ८ ॥

१२४४ प्रेष्ठं वो अतिथिं स्तुषे मित्रमिव प्रियम् ।
अग्ने रथं न वेद्यम् ॥ १ ॥ ८।८४।१ ५

१२४५ कविमिव प्रशंस्यं यं देवास इति द्विता । (ऋग्वेदे) (सामवेदे)
नि मर्त्येष्वादधुः ॥ २ ॥ ८।८४।२
१२४६ त्वं यविष्ठ दाशुषो नॄँः पाहि शृणुही गिरः ।
रक्षा तोकमुत त्मना ॥३॥ ( धा० १२ । उ० नास्ति । स्व० ४ )॥१८(यी)॥ ८।८४।३

१२४७ एन्द्र नो गधि प्रिय सत्राजिदगोह्य ।
गिरिर्न विश्वतः पृथुः पतिर्दिवः ॥ १ ॥ ८।९८।४ ३९३
१२४८ अभि हि सत्य सोमपा उभे बभूथ रोदसी ।
इन्द्रासि सुन्वतो वृधः पतिर्दिवः ॥ २ ॥ ८।९८।५
१२४९ त्वं हि शश्वतीनामिन्द्र धर्ता पुरामसि ।
हन्ता दस्योर्मनोर्वृधः पतिर्दिवः ॥३॥ (धा० २० । उ० २ । स्व० ७)॥१९(फे)॥ ८।९८।६

१२५० पुरां भिन्दुर्युवा कविरमितौजा अजायत ।
इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ॥ १ ॥ १।११।४ ३५९
१२५१ त्वं वलस्य गोमतोऽपावरद्रिवो बिलम् ।
त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ॥ २ ॥ १।११।५
१२५२ इन्द्रमीशानमोजसाभि स्तोमैरनूषत ।
सहस्रं यस्य रातय उत वा सन्ति भूयसीः ॥ ३ ॥ २०(ही)॥ १।११।८
( धा० ११ । उ० नास्ति । स्व० ४ )

इति नवमः खण्डः ॥ ९ ॥

इति पञ्चमप्रपाठके प्रथमोऽर्धः ॥ ५-१ ॥

॥ नवमोऽध्यायः समाप्तः॥ ९ ॥

# अथ दशमोऽध्यायः।

[२]

अथ पञ्चमप्रपाठकस्य द्वितीयोऽर्धः॥ ५॥

( १-२३ ) १ पराशरः शाक्त्यः; २ शुनःशेप आजीगर्तिः स देवरातः कृत्रिमो वैश्वामित्रः; ३ असितः काश्यपो देवलो वा; ४,७, राहूगण आंगिरसः; ५ (१-४), ५ (प्रथम पादः) प्रियमेध आंगिरसः; ५ ( शेषास्त्रयः पादाः ) ६ ( प्रथम पादः ) १४ नृमेध आंगिरसः; ६ ( शेषास्त्रयः पादाः ) इध्मवाहो दार्ढच्युतः; ८ पवित्र आंगिरसो वा वसिष्ठो वा उभौ वा; ९ वसिष्ठो मैत्रावरुणिः; १० वत्सः काण्वः; ११ शतं वैखानसः; १२ सप्तर्षयः ( १ भरद्वाजो बार्हस्पत्यः, २ कश्यपो मारीचः, ३ गोतमो राहूगणः, ४ अत्रिर्भौमः; ५ विश्वामित्रो गाथिनः, ६ जमदग्निर्भार्गवः; ७ वसिष्ठो मैत्रावरुणिः ); १३ वसुर्भारद्वाजः; १५ भर्गः प्रागाथः; १६ भरद्वाजो बार्हस्पत्यः; १७ मनुराप्सवः; १८ अम्बरीषो वार्षागिरः ऋजिश्वा भारद्वाजश्च; १९ अग्नयो धिष्ण्या ऐश्वराः, २० अमहीयुरांगिरसः, २१ त्रिशोकः काण्वः; २२ गोतमो राहूगणः; २३ मधुच्छन्दा वैश्वामित्रः॥ १-७, ११-१३, १६-२० पवमानः सोमः, ८ पवमानाध्येता, ९, १४-१५, २१ ( २-३ ), २२-२३ इन्द्रः; ९ अग्निः, २१ ( १ ) अग्नीन्द्रौ॥ १,९ त्रिष्टुप्; २-७, १०-११, १६, २०-२१ गायत्री; ८, १८, २३ अनुष्टुप्; १२ ( १-२ ), १४,१५ प्रगाथः=( बृहती, सतोबृहती ); १३ (३), १९ द्विपदा विराट्; १३ जगती, १७, २२ उष्णिक्॥

(ऋग्वेदे) (सामवेदे)

१२५३ अक्रान्त्समुद्रः प्रथमे विधर्मन् जनयन्प्रजा भुवनस्य गोपाः।
वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे स्वानो अद्रिः॥ १॥
९।९७।४० ५२९

१२५४ मत्सि वायुमिष्टये राधसे नो मत्सि मित्रावरुणा पूयमानः।
मत्सि शर्धो मारुतं मत्सि देवान्मत्सि द्यावापृथिवी देव सोम॥२॥ ९।९७।४२

१२५५ महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान्।
अदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुः॥ ३॥ १ (टै)॥
(धा० २८। उ० १। स्व० ८) ९।९७।४१ ५४२

१२५६ एष देवो अमर्त्यः पर्णवीरिव दीयते।
अभि द्रोणान्यासदम्॥ १॥
९।३।१

१२५७ एष विप्रैरभिष्टुतोऽपो देवो वि गाहते।
दधद्रत्नानि दाशुषे॥ २॥
९।३।६

(ऋग्वेदे) (सामवेदे)

१२५८ एष विश्वानि वार्या शूरो यन्निव सत्वभिः ।
पवमानः सिषासति ॥ ३ ॥ ९।३।४

१२५९ एष देवो रथर्यति पवमानो दिशस्यति ।
आविष्कृणोति वग्वनुम् ॥ ४ ॥ ९।३।५

१२६० एष देवो विपन्युभिः पवमान ऋतायुभिः ।
हरिर्वाजाय मृज्यते ॥ ५ ॥ ९।३।३

१२६१ एष देवो विपा कृतोऽति ह्वरांसि धावति ।
पवमानो अदाभ्यः ॥ ६ ॥ ९।३।२

१२६२ एष दिवं वि धावति तिरो रजांसि धारया ।
पवमानः कनिक्रदत् ॥ ७ ॥ ९।३।७

१२६३ एष दिवं व्यासरत्तिरो रजांस्यस्तृतः ।
पवमानः स्वध्वरः ॥ ८ ॥ ९।३।८

१२६४ एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः ।
हरिः पवित्रे अर्षति ॥ ९ ॥ ९।३।९

१२६५ एष उ स्य पुरुव्रतो जज्ञानो जनयन्निषः ।
धारया पवते सुतः ॥१०॥ (धा० ३४ । उ० ३ । स्व० ६) ॥ २ (दू) ॥ ९।३।१०

॥ इति प्रथमः खण्डः ॥१॥

१२६६ एष धिया यात्यण्व्या शूरो रथेभिराशुभिः ।
गच्छन्निन्द्रस्य निष्कृतम् ॥ १ ॥ ९।१५।१

१२६७ एष पुरू धियायते बृहते देवतातये ।
यत्रामृतास आशत ॥ २ ॥ ९।१५।२

१२६८ एतं मृजन्ति मर्ज्यमुप द्रोणेष्वायवः ।
प्रचक्राणं महीरिषः ॥ ३ ॥ ९।१५।७

( ऋग्वेदे )( सामवेदे )

१२६९ एष हितो वि नीयतेऽन्तः शुन्ध्यावता पथा ।
यदी तुञ्जन्ति भूर्णयः ॥ ४ ॥ ९।१५।३

१२७० एष रुक्मिभिरीयते वाजी शुभ्रेभिरंशुभिः ।
पतिः सिन्धूनां भवन् ॥ ५ ॥ ९।१५।५

१२७१ एष शृङ्गाणि दोधुवच्छिशीते यूथ्यो३ वृषा ।
नृम्णा दधान ओजसा ॥ ६ ॥ ९।१५।४

१२७२ एष वसूनि पिब्दनः परुषा ययिवाँ अति ।
अव शादेषु गच्छति ॥ ७ ॥ ९।१५।६

१२७३ एतमु त्यं दश क्षिपो हरिं हिन्वन्ति यातवे ।
स्वायुधं मदिन्तमम् ॥ ८ ॥ ( धा० ३१ । उ० १ । स्व० ७ ) ॥३(के)॥ ९।१५।८

॥ इति द्वितीयः खण्डः ॥ २ ॥

१२७४ एष उ स्य वृषा रथोऽव्या वारेभिरव्यत ।
गच्छन्वाजं सहस्त्रिणम् ॥ १ ॥ ९।३८।१

१२७५ एतं त्रितस्य योषणो हरिं हिन्वन्त्यद्रिभिः ।
इन्दुमिन्द्राय पीतये ॥ २ ॥ ९।३८।२

१२७६ एष स्य मानुषीष्वा श्येनो न विक्षु सीदति ।
गच्छं जारो न योषितम् ॥ ३ ॥ ९।३८।४

१२७७ एष स्य मद्यो रसोऽव चष्टे दिवः शिशुः ।
य इन्दुर्वारमाविशत् ॥ ४ ॥ ९।३८।५

१२७८ एष स्य पीतये सुतो हरिरर्षति धर्णसिः ।
क्रन्दन्योनिमभि प्रियम् ॥ ५ ॥ ९।३८।६

१२७९ एतं त्यं हरितो दश मर्मृज्यन्ते अपस्युवः ।
याभिर्मदाय शुम्भते ॥६॥ ( धा० २१ । उ० ८ । स्व० ४ ) ॥४(बी)॥ ९।३८।३

॥ इति तृतीयः खण्डः ॥ ३ ॥

(ऋग्वेदे) (सामवेदे)

१२८० एष वाजी हितो नृभिर्विश्वविन्मनसस्पतिः ।
अव्यं वारं वि धावति ॥ १ ॥ ९।२८।१

१२८१ एष पवित्रे अक्षरत्सोमो देवेभ्यः सुतः ।
विश्वा धामान्याविशन् ॥ २ ॥ ९।२८।२

१२८२ एष देवः शुभायतेऽधि योनावमर्त्यः ।
वृत्रहा देववीतमः ॥ ३ ॥ ९।२८।३

१२८३ एष वृषा कनिक्रदद्दशभिर्जामिभिर्यतः ।
अभि द्रोणानि धावति ॥ ४ ॥ ९।२८।४

१२८४ एष सूर्यमरोचयत्पवमानो अधि द्यवि ।
पवित्रे मत्सरो मदः ॥ ५ ॥ ९।२८।५ (प्रथमः पादः) ९।२७।४ (त्रयः पादाः)

१२८५ एष सूर्येण हासते संवसानो विवस्वता ।
पतिर्वाचो अदाभ्यः ॥ ६ ॥ (धा० २६ । उ० १ । स्व० ७) ॥५(के)॥ ९।२७।५ (प्रथमः पादः)
९।२६।४ (त्रयः पादाः)

॥ इति चतुर्थः खण्डः ॥ ४ ॥

१२८६ एष कविरभिष्टुतः पवित्रे अधि तोशते ।
पुनानो घ्नन्नप द्विषः ॥ १ ॥ ९।२७।१

१२८७ एष इन्द्राय वायवे स्वर्जित्परि षिच्यते ।
पवित्रे दक्षसाधनः ॥ २ ॥ ९।२७।२

१२८८ एष नृभिर्वि नीयते दिवो मूर्धा वृषा सुतः ।
सोमो वनेषु विश्ववित् ॥ ३ ॥ ९।२७।३

१२८९ एष गव्युरचिक्रदत्पवमानो हिरण्ययुः ।
इन्दुः सत्राजिदस्तृतः ॥ ४ ॥ ९।२७।४

१२९० एष शुष्म्यसिष्यददन्तरिक्षे वृषा हरिः ।
पुनान इन्दुरिन्द्रमा ॥ ५ ॥ ९।२७।६

(ऋग्वेदे) (सामवेदे)

१२९१ एष शुष्म्यदाभ्यः सोमः पुनानो अर्षति ।
देवावीरघशंसहा ॥ ६ ॥ ( धा० ३१ । उ० ३ । स्व० ५ ) ॥६(गु)॥ ९।२८।६

॥ इति पञ्चमः खण्डः ॥ ५ ॥

१२९२ स सुतः पीतये वृषा सोमः पवित्रे अर्षति ।
विघ्नन्रक्षांसि देवयुः ॥ १ ॥ ९।३७।१

१२९३ स पवित्रे विचक्षणो हरिरर्षति धर्णसिः ।
अभि योनिं कनिक्रदत् ॥ ॥ ९।३७।२

१२९४ स वाजी रोचनं दिवः पवमानो वि धावति ।
रक्षोहा वारमव्ययम् ॥ ३ ॥ ९।३७।३

१२९५ स त्रितस्याधि सानवि पवमानो अरोचयत् ।
जामिभिः सूर्यं सह ॥ ४ ॥ ९।३७।४

१२९६ स वृत्रहा वृषा सुतो वरिवोविददाभ्यः ।
सोमो वाजमिवासरत् ॥ ५ ॥ ९।३७।५

१२९७ स देवः कविनेषितो३ऽभि द्रोणानि धावति ।
इन्दुरिन्द्राय मंहयन् ॥ ६ ॥ ( धा० २१ । उ० २ । स्व० ७ ) ॥७(खे)॥ ९।३७।६

॥ इति षष्ठः खण्डः ॥ ६ ॥

१२९८ यः पावमानीरध्येत्यृषिभिः संभृतं रसम् ।
सर्वं स पूतमश्नाति स्वदितं मातरिश्वना ॥ १ ॥ ९।६७।३१

१२९९ पावमानीर्यो अध्येत्यृषिभिः संभृतं रसम् ।
तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकम् ॥ २ ॥ ९।६७।३२

१३०० पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतः ।
ऋषिभिः संभृतो रसो ब्राह्मणेष्वमृतं हितम् ॥ ३ ॥ (न ऋग्वेदीयः)

१३०१ पावमानीर्दधन्तु न इमं लोकमथो अमुम् ।
कामान्त्समर्धयन्तु नो देवीर्देवैः समाहृताः ॥ ४ ॥ (न ऋग्वेदीयः)

१३०२ येन देवाः पवित्रेणात्मानं पुनते सदा । (ऋग्वेदे) (सामवेदे)
तेन सहस्रधारेण पावमानीः पुनन्तु नः ॥ ५ ॥ (न ऋग्वेदीयः)
१३०३ पावमानीः स्वस्त्ययनीस्ताभिर्गच्छति नान्दनम् ।
पुण्यांश्च भक्षान्भक्षयत्यमृतत्वं च गच्छति ॥ ६ ॥ ८(ती)॥ (न ऋग्वेदीयः)
( धा० ४४ । उ० १ । स्व० ४ )

॥ इति सप्तमः खण्डः ॥ ७ ॥

१३०४ अगन्म महा नमसा यविष्ठं यो दीदाय समिद्धः स्वे दुरोणे ।
चित्रभानुं रोदसी अन्तरुर्वी स्वाहुतं विश्वतः प्रत्यञ्चम् ॥ १ ॥ ७।१२।१
१३०५ स मह्ना विश्वा दुरितानि साह्वानग्निः ष्टवे दम आ जातवेदाः ।
स नो रक्षिषद्दुरितादवद्यादस्मान्गृणत उत नो मघोनः ॥२॥ ७।१२।२
१३०६ त्वं वरुण उत मित्रो अग्ने त्वां वर्धन्ति मतिभिर्वसिष्ठाः ।
त्वे वसु सुषणनानि सन्तु यूयं पात स्वस्तिभिः सदा नः ॥३॥९(ही)॥ ७।१२।३
( धा० २१ । उ० नास्ति । स्व० ४ )

१३०७ महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव ।
स्तोमैर्वत्सस्य वावृधे ॥ १ ॥ ८।६।१
१३०८ कण्वा इन्द्रं यदक्रत स्तोमैर्यज्ञस्य साधनम् ।
जामि ब्रुवत आयुधा ॥ २ ॥ ८।६।३
१३०९ प्रजामृतस्य पिप्रतः प्र यद्भरन्त वह्नयः ।
विप्रा ऋतस्य वाहसा ॥ ३ ॥ ( धा० ८ । उ० १ । स्व० ३ ) ॥१०(टि)॥ ८।६।२

॥ इति अष्टमः खण्डः ॥ ८ ॥

१३१० पवमानस्य जिघ्नतो हरेश्चन्द्रा असृक्षत ।
जीरा अजिरशोचिषः ॥ १ ॥ ९।६६।२५
१३११ पवमानो रथीतमः शुभ्रेभिः शुभ्रशस्तमः ।
हरिश्चन्द्रो मरुद्गणः ॥ २ ॥ ९।६६।२६

(ऋग्वेदे) (सामवेदे)

१३१२ पवमान व्यश्नुहि रश्मिभिर्वाजसातमः ।
दधत्स्तोत्रे सुवीर्यम् ॥३॥ (धा० ११। उ० नास्ति । स्व० १) ॥११(ह)॥ ९।६६।२७

१३१३ परीतो षिञ्चता सुतं सोमो य उत्तमं हविः ।
दधन्वाँ यो नर्यो अप्स्वन्तरा सुषाव सोममद्रिभिः ॥१॥ ९।१०७।१

१३१४ नूनं पुनानोऽविभिः परि स्रवादब्धः सुरभिंतरः ।
सुते चित्वाप्सु मदामो अन्धसा श्रीणन्तो गोभिरुत्तरम् ॥२॥ ९।१०७।२

१३१५ परि स्वानश्चक्षसे देवमादनः क्रतुरिन्दुर्विचक्षणः ॥३॥ १२(खा)॥ ९।१०७।३
( धा० १६ । उ० २ । स्व० २ )

१३१६ असावि सोमो अरुषो वृषा हरी राजेव दस्मो अभि गा अचिक्रदत् ।
पुनानो वारमत्येष्यव्ययं श्येनो न योनिं घृतवन्तमासदत् ॥१॥ ९।८२।१

१३१७ पर्जन्यः पिता महिषस्य पर्णिनो नाभा पृथिव्या गिरिषु क्षयं दधे ।
स्वसार आपो अभि गा उदासरन्त्सं ग्रावभिर्वसते वीते अध्वरे ॥२॥ ९।८२।३

१३१८ कविर्वेधस्या पर्येषि माहिनमत्यो न मृष्टो अभि वाजमर्षसि ।
अपसेधन् दुरिता सोम नो मृड घृता वसानः परि यासि निर्णिजम् ॥३॥१३(गू)॥
( धा० २६ । उ० ३ । स्व० ६ ) ९।८२।२

॥ इति नवमः खण्डः ॥ ९ ॥

१३१९ श्रायन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत ।
वसूनि जातो जनिमान्योजसा प्रति भागं न दीधिमः ॥१॥ ८।९९।३ २६७

१३२० अलर्षिरातिं वसुदामुप स्तुहि भद्रा इन्द्रस्य रातयः ।
यो अस्य कामं विधतो न रोषति मनो दानाय चोदयन् ॥२॥१४(लू)॥ ८।९९।४
( धा० १९ । उ० नास्ति । स्व० ६ )

१३२१ यत इन्द्र भयामहे ततो नो अभयं कृधि ।
मघवन् छग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि ॥१॥ ८।६१।१३ २७४

१३२२ त्वं हि राधसस्पते राधसो महः क्षयस्यासि विधर्ता ।
तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहे ॥२॥१५(वा)॥ ८।६१।१४
( धा० २० । उ० ३ । स्व० २ )

॥ इति दशमः खण्डः ॥ १० ॥

१३२३ त्वं सोमासि धारयुर्मन्द्र ओजिष्ठो अध्वरे। (ऋग्वेदे) (सामवेदे)
पवस्व मंहयद्रयिः ।।१।। ९।६७।१
१३२४ त्वं सुतो मदिन्तमो दधन्वान्मत्सरिन्तमः।
इन्दुः सत्राजिदस्तृतः ।।२।। ९।६७।२
१३२५ त्वं सुष्वाणो अद्रिभिरभ्यर्ष कनिक्रदत्।
द्युमन्तं शुष्ममा भर ।।३।। (धा० १४। उ० नास्ति। स्व० ४) ।।१६(ली)।। ९।६७।३

१३२६ पवस्व देववीतय इन्दो धाराभिरोजसा।
आ कलशं मधुमान्त्सोम नः सदः ।। १ ।। ९।१०६।७ ५७१
१३२७ तव द्रप्सा उदप्रुत इन्द्रं मदाय वावृधुः।
त्वां देवासो अमृताय कं पपुः ।। २ ।। ९।१०६।८
१३२८ आ नः सुतास इन्दवः पुनाना धावता रयिम्।
वृष्टिद्यावो रीत्यापः स्वर्विदः ।। ३ ।। ।।१७(वौ)।। ९।१०६।९
(धा० १५। उ० नास्ति। स्व० नास्ति)

१३२९ परि त्यं हर्यतं हरिं बभ्रुं पुनन्ति वारेण।
यो देवान्विश्वाँ इत्परि मदेन सह गच्छति ।। १ ।। ९।९८।७ ५५२
१३३० द्विर्यं पञ्च स्वयशसं सखायो अद्रिसंहतम्।
प्रियमिन्द्रस्य काम्यं प्रस्नापयन्त ऊर्मयः ।। २ ।। ९।९८।६
१३३१ इन्द्राय सोम पातवे वृत्रघ्ने परि षिच्यसे।
नरे च दक्षिणावते वीराय सदनासदे ।। ३ ।। ।।१८(जी)।। ९।९८।१० १६७२
(धा० २२। उ० ३। स्व० ४)

१३३२ पवस्व सोम महे दक्षायाश्वो न निक्तो वाजी धनाय ।। १ ।। ९।१०९।१० ४३०
१३३३ प्र ते सोतारो रसं मदाय पुनन्ति सोमं महे द्युम्नाय ।। २ ।। ९।१०९।११
१३३४ शिशुं जज्ञानं हरिं मृजन्ति पवित्रे सोमं देवेभ्य इन्दुम् ।।३।।१९(का)।।
(धा० ११। उ० १। स्व० २) ९।१०९।१२

(ऋग्वेदे) (सामवेदे)

१३३५ उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम् ।
इन्दुं देवा अयासिषुः ॥ १ ॥ ९।६१।१३ ४८७,७६२

१३३६ तमिद्वर्धन्तु नो गिरो वत्सं संशिश्वरीरिव ।
य इन्द्रस्य हृदंसनिः ॥ २ ॥ ९।६१।१४

१३३७ अर्षा नः सोम शं गवे धुक्षस्व पिप्युषीमिषम् ।
वर्धा समुद्रमुक्थ्य ॥३॥ (धा० ११ । उ० नास्ति । स्व० ४) ॥२०(ही)॥ ९।६१।१५

॥ इति एकादशः खण्डः ॥११॥

१३३८ आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् ।
येषामिन्द्रो युवा सखा ॥ १ ॥ ८।४५।१ १३३

१३३९ बृहन्निदिध्म एषां भूरि शस्त्रं पृथुः स्वरुः ।
येषामिन्द्रो युवा सखा ॥ २ ॥ ८।४५।२

१३४० अयुद्ध इद्युधा वृतं शूर आजति सत्वभिः ।
येषामिन्द्रो युवा सखा ॥३॥ (धा० ३ । उ० २ । स्व० १) ॥२१(ल)॥ ८।४५।३

१३४१ य एक इद्विदयते वसु मर्ताय दाशुषे ।
ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ॥ १ ॥ १।८४।७ ३८९

१३४२ यश्चिद्धि त्वा बहुभ्य आ सुतावाँ आविवासति ।
उग्रं तत्पत्यते शव इन्द्रो अङ्ग ॥ २ ॥ १।८४।९

१३४३ कदा मर्तमराधसं पदा क्षुम्पमिव स्फुरत् ।
कदा नः शुश्रवद्गिर इन्द्रो अङ्ग ॥३॥ (धा० ११ । उ० १ । स्व० ३) ॥२२(कि)॥ १।८४।८

१३४४ गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥ १ ॥ १।१०।१ ३४२

१३४५ यत्सानोः सान्वारुहो भूर्यस्पष्ट कर्त्वम् ।
तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ॥ २ ॥ १।१०।२

१३४६ युंक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा। (ऋग्वेदे) (सामवेदे)

अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ॥ ३ ॥२३(बी)॥ १।१०।३

( धा० २५। उ० ३। स्व० ४ )

॥ इति द्वादशः खण्डः ॥१२॥

॥ इति पञ्चमप्रपाठके द्वितीयोऽर्धः, पञ्चमप्रपाठकश्च समाप्तः ॥ ५-२ ॥

॥ इति दशमोऽध्यायः ॥ १० ॥

## अथ एकादशोऽध्यायः।

[ १ ]

अथ षष्ठप्रपाठके प्रथमोऽर्धः ॥ ६ ॥

( १-११ ) मेधातिथिः काण्वः, २, १० वसिष्ठो मैत्रावरुणिः; ३ प्रगाथः काण्वः, ४ पराशरः शाक्त्यः, ५ प्रगाथो घौरः काण्वः; ६ मेध्यातिथिः काण्वः; ७ त्र्यरुणस्त्रैवृष्णः, त्रसदस्युः पौरुकुत्स्यः, ८ अग्नयो धिष्ण्या ऐश्वराः; ९ हिरण्यस्तूप आङ्गिरसः; १० सार्पराज्ञी ॥ १ आप्रीसूक्तं= ( १ इध्मः समिद्धोऽग्निर्वा, २ तनूनपात्, ३ नराशंसः, ४ इळः ); २ आदित्यः; ३, ५-६ इन्द्रः, ४, ७-९ पवमानः सोमः; १० अग्निः; ११ आत्मा, सूर्यो वा। १-३ ११ गायत्री; ४ त्रिष्टुप्; ५-६ प्रगाथः= ( विषमा बृहती, समा सतोबृहती ); ७ पिपीलिकमध्या अनुष्टुप्; ८ द्विपदा विराट्; ९ जगती; १० विराट् ॥

१३४७ सुषमिद्धो न आ वह देवाँ अग्ने हविष्मते।

होतः पावक यक्षि च ॥ १ ॥ १।१३।१

१३४८ मधुमन्तं तनूनपाद्यज्ञं देवेषु नः कवे।

अद्या कृणुह्यूतये ॥ २ ॥ १।१३।२

१३४९ नराशंसमिह प्रियमस्मिन्यज्ञ उप ह्वये।

मधुजिह्वं हविष्कृतम् ॥ ३ ॥ १।१३।३

१३५० अग्ने सुखतमे रथे देवाँ ईडित आ वह।

असि होता मनुर्हितः ॥४॥ (धा० १८। उ० नास्ति। स्व० २)॥१(रा)॥ १।१३।४

१३५१ यदद्य सूर उदितेऽनागा मित्रो अर्यमा।

सुवाति सविता भगः ॥ १ ॥ ७।६६।४

(ऋग्वेदे)(सामवेदे)

१३५२ सुप्रावीरस्तु स क्षयः प्र नु यामन्त्सुदानवः ।
ये नो अंहोऽतिपिप्रति ॥ २ ॥ ७।६६।५

१३५३ उत स्वराजो अदितिरदब्धस्य व्रतस्य ये ।
महो राजान ईशते ॥ ३ ॥ (धा० ११ । उ० २ । स्व० ३) ॥२(खि)॥ ७।६६।६

१३५४ उ त्वा मदन्तु सोमाः कृणुष्व राधो अद्रिवः ।
अव ब्रह्मद्विषो जहि ॥ १ ॥ ८।६४।१ १९४

१३५५ पदा पणीनराधसो नि बाधस्व महाँ असि ।
न हि त्वा कश्च न प्रति ॥ २ ॥ ८।६४।२

१३५६ त्वमीशिषे सुतानामिन्द्र त्वमसुतानाम् ।
त्वं राजा जनानाम् ॥ ३ ॥ (धा० १३ । उ० २ । स्व० ३) ॥३(ठि)॥ ९।९७।३७

॥ इति प्रथमः खण्डः ॥१॥

१३५७ आ जागृविर्विप्र ऋतं मतीनां सोमः पुनानो असदच्चमूषु ।
सपन्ति यं मिथुनासो निकामा अध्वर्यवो रथिरासः सुहस्ताः ॥ १ ॥ ९।९७।३७

१३५८ स पुनान उप सूरे दधान ओभे अप्रा रोदसी वी ष आवः ।
प्रिया चिद्यस्य प्रियसास ऊती सतो धनं कारिणे न प्र यंसत् ॥२॥ ९।९७।३८

१३५९ स वर्धिता वर्धनः पूयमानः सोमो मीढ्वाँ अभि नो ज्योतिषावित् ।
यत्र नः पूर्वे पितरः पदज्ञाः स्वर्विदो अभि गा अद्रिमिष्णन् ॥३॥ ४(तै)॥
(धा० १९ । उ० १ । स्व० ८) ९।९७।३९

१३६० मा चिदन्यद्वि शंसत सखायो मा रिषण्यत ।
इन्द्रमित्स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत ॥ १ ॥ ८।१।१ २४२

१३६१ अवक्रक्षिणं वृषभं यथा जुवं गां न चर्षणीसहम् ।
विद्वेषणं संवननमुभयङ्करं मंहिष्ठमुभयाविनम् ॥ २ ॥ ५(यी)॥ ८।१।२
(धा० १७ । उ० ना० । स्व० ४)

१३६२ उदु त्ये मधुमत्तमा गिरः स्तोमास ईरते ।
सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव ॥ १ ॥ ८।३।१५

१३६३ कण्वा इव भृगवः सूर्या इव विश्वमिद्धीतमाशत । (ऋग्वेदे) (सामवेदे)
इन्द्रं स्तोमेभिर्महयन्त आयवः प्रियमेधासो अस्वरन् ॥ २ ॥ ६(ला)॥
( धा० १४ । उ० नास्ति । स्व० २ ) ८।३।१६

१३६४ पर्यू षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः ।
द्विषस्तरध्या ऋणया न ईरसे ॥ १ ॥ ९।११०।१ ४२८

१३६५ अजीजनो हि पवमान सूर्यं विधारे शक्मना पयः ।
गोजीरया रंहमाणः पुरन्ध्या ॥ २ ॥ ९।११०।३

१३६६ अनु हि त्वा सुतं सोम मदामसि [महे समर्यराज्ये ।
वाजाँ अभि पवमान प्र गाहसे] ॥ ३ ॥ ७ (ल) ॥ ९।११०।२ ४३२
(धा० ९ । उ० नास्ति । स्व० १)

१३६७ परि प्र धन्व[इन्द्राय सोम स्वादुर्मित्राय पूष्णे भगाय] ॥ १ ॥ ९।१०९।१ ४२७

१३६८ एवामृताय महे क्षयाय स शुक्रो अर्ष दिव्यः पीयूषः ॥ २ ॥ ९।१०९।३

१३६९ इन्द्रस्ते सोम सुतस्य पेयात्क्रत्वे दक्षाय विश्वे च देवाः ॥३॥८(ला)॥
(धा० ९ । उ० नास्ति । स्व० २) ९।१०९।२

॥ इति द्वितीयः खण्डः ॥२॥

१३७० सूर्यस्येव रश्मयो द्रावयित्नवो मत्सरासः प्रसुतः साकमीरते ।
तन्तुं ततं परि सर्गास आशवो नेन्द्रादृते पवते धाम किं चन ॥१॥ ९।६९।६

१३७१ उपो मतिः पृच्यते सिच्यते मधु मन्द्राजनी चोदते अन्तरासनि ।
पवमानः सन्तनिः सुन्वतामिव मधुमान् द्रप्सः परि वारमर्षति॥२॥९।६९।२

१३७२ उक्षा मिमेति प्रति यन्ति धेनवो देवस्य देवीरुप यन्ति निष्कृतम् ।
अत्यक्रमीदर्जुनं वारमव्ययमत्कं न निक्तं परि सोमो अव्यत ॥३॥९(ग)॥
( धा० २६ । उ० ३ । स्व० १ ) ९।६९।४

१३७३ अग्निं नरो दीधितिभिररण्योर्हस्तच्युतं जनयत प्रशस्तम् ।
दूरेदृशं गृहपतिमथव्युम् ॥ १ ॥ ७।१।१ ७२

(ऋग्वेदे)(सामवेदे)

१३७४ तमग्निमस्ते वसवो न्यृण्वन्त्सुप्रतिचक्षमवसे कुतश्चित् ।

दक्षाय्यो यो दम आस नित्यः ॥ २ ॥ ७।१।२

१३७५ प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ ।

त्वां शश्वन्त उप यन्ति वाजाः ॥३॥ (धा० २८। उ० ३। स्व० ४)॥१०(डी)॥ ७।१।३

१३७६ आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः ।

पितरं च प्रयन्त्स्वः ॥ १ ॥ १०।१८९।१ ६३०

१३७७ अन्तश्चरति रोचनास्य प्राणादपानती ।

व्यख्यन्महिषो दिवम् ॥ २ ॥ १०।१८९।२ ६३१

१३७८ त्रिंशद्धाम वि राजति वाक्पतङ्गाय धीयते ।

प्रति वस्तोरह द्युभिः ॥३॥ ( धा० १७। उ० २। स्व० ३ ) ॥११(छि)॥ १०।१८९।३ ६३२

॥ इति तृतीयः खण्डः ॥ ३ ॥ इति षष्ठप्रपाठके प्रथमोऽर्धः ॥ ६-१ ॥

॥ एकादशोऽध्यायः समाप्तः ॥ ११ ॥

## अथ द्वादशोऽध्यायः ।

[ २ ]

अथ षष्ठप्रपाठके द्वितीयोऽर्धः ॥ ६-२ ॥

(१-२०) १ ( १-२ ) गोतमो राहूगणः; १ ( ३ ), ८, ११ वसिष्ठो मैत्रावरुणिः; २, ७ भरद्वाजो बार्हस्पत्यः; ३ प्रजापतिर्वैश्वामित्रो वाच्यो वा; ४,१३ सोभरिः काण्वः; ५ मेधातिथि-मेध्यातिथी काण्वौ; ६ ( १ ) ऋजिश्वा भारद्वाजः; ६ ( २ ) ऊर्ध्वसद्मा आंगिरसः, ९ तिरश्चीराङ्गिरसः; १० सुतंभर आत्रेयः; १२,१९ नृमेध-पुरुमेधावाङ्गिरसौ; १४ शुनःशेप आजीगर्तिः; १५ नोधा गौतमः १६ मेध्यातिथिः काण्वः; १७ रेणुर्वैश्वामित्रः; १८ कुत्स आङ्गिरसः; २० अगस्त्यो मैत्रावरुणः॥

१-२, ७, १०, १३-१४ अग्निः; ३, ६, ८, ११, १५,१७-१८ पवमानः सोमः; ४,५,९,१२, १६,१९,२० इन्द्रः ॥ १-२,७,१०,१४, गायत्री; ३,९,१९ (१-२) २० (२-३) अनुष्टुप्; ४, ६ १३ काकुभः प्रगाथः= ( विषमा ककुप्, समा सतोबृहती ); ५, १९ ( ३ ), बृहती; ८, ११, १५, १८ त्रिष्टुप्; १२, १६ प्रगाथः = ( विषमा बृहती, समा सतोबृहती ); १७ जगती; २० ( १ ) स्कन्धोग्रीवी बृहती ॥

१३७९ उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये ।

आरे अस्मे च शृण्वते ॥ १ ॥ १।७४।१

(ऋग्वेदे) (सामवेदे)

१३८० यः स्त्रीहितीषु पूर्व्यः संजग्मानासु कृष्टिषु ।
अरक्षद्दाशुषे गयम् ॥ २ ॥ १।७४।२

१३८१ स नो वेदो अमात्यमग्नी रक्षतु शन्तमः ।
उतास्मान्पात्वंहसः ॥ ३ ॥ ७।१५।३

१३८२ उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि ।
धनञ्जयो रणेरणे ॥ ४ ॥ (धा० १९। उ० १। स्व० ३) ॥ १ (ति) ॥ १।७४।३

॥ इति प्रथमः खण्डः ॥१॥

१३८३ अग्ने युंक्ष्वा हि ये तवाश्वासो देव साधवः ।
अरं वहन्त्याशवः ॥ १ ॥ ६।१६।४३

१३८४ अच्छा नो याह्या वहाभि प्रयांसि वीतये ।
आ देवान्त्सोमपीतये ॥ २ ॥ ६।१६।४४

१३८५ उदग्ने भारत द्युमदजस्रेण दविद्युतत् ।
शोचा वि भाह्यजर ॥३॥ ( धा० १७। उ० नास्ति। स्व० ४ )॥२(यी)॥ ६।१६।४५

१३८६ प्र सुन्वानायान्धसो मर्तो न वष्ट तद्वचः ।
अप श्वानमराधसं हता मखं न भृगवः ॥ १ ॥ ९।१०१।१३ ५५३;७७४

१३८७ आ जामिरत्के अव्यत भुजे न पुत्र ओण्योः ।
सरज्जारो न योषणां वरो न योनिमासदम् ॥ २ ॥ ९।१०१।१४

१३८८ स वीरो दक्षसाधनो वि यस्तस्तम्भ रोदसी ।
हरिः पवित्रे अव्यत वेधा न योनिमासदम् ॥ ३ ॥ ३ (त्वै) ॥ ९।१०१।१५
( धा० २१। उ० २। स्व० ८। )

१३८९ अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनादसि ।
युधेदापित्वमिच्छसे ॥ १ ॥ ८।२१।१३ ३९९

१३९० न की रेवन्तं सख्याय विन्दसे पीयन्ति ते सुराश्वः ।
यदा कृणोषि नदनुं समूहस्यादित्पितेव हूयसे ॥ २ ॥४ (पि)॥ ८।२१।१४
( धा० १५। उ० १। स्व० ३ )

(ऋग्वेदे) (सामवेदे)

१३९१ आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये ।
ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये ॥ १ ॥ ८।१।२४ २४५

१३९२ आ त्वा रथे हिरण्यये हरी मयूरशेप्या ।
शितिपृष्ठा वहतां मध्वो अन्धसो विवक्षणस्य पीतये ॥ २ ॥ ८।१।२५

१३९३ पिबा त्व३स्य गिर्वणः सुतस्य पूर्वपा इव ।
परिष्कृतस्य रसिन इयमासुतिश्चारुर्मदाय पत्यते ॥३ ॥५(प)॥ ८।१।२६
( धा० २० । उ० १ । स्व० १ )

१३९४ आ सोता परि षिञ्चताश्वं न स्तोममप्तुरं रजस्तुरम् ।
वनप्रक्षमुदप्रुतम् ॥ १ ॥ ९।१०८।७ ५८०

१३९५ सहस्रधारं वृषभं पयोदुहं प्रियं देवाय जन्मने ।
ऋतेन य ऋतजातो विवावृधे राजा देव ऋतं बृहत् ॥२॥६(या)॥ ९।१०८।८
( धा० १२ । उ० नास्ति । स्व० २ )

॥ इति द्वितीयः खण्डः ॥ २ ॥

१३९६ अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया ।
समिद्धः शुक्र आहुतः ॥ १ ॥ ६।१६।३४ ४

१३९७ गर्भे मातुः पितुष्पिता विदिद्युतानो अक्षरे ।
सीदन्नृतस्य योनिमा ॥ २ ॥ ६।१६।३५

१३९८ ब्रह्म प्रजावदा भर जातवेदो विचर्षणे ।
अग्ने यद्दीदयद्दिवि ॥३॥ (धा० १० । उ० नास्ति । स्व० १) ॥३(व)॥ ६।१६।३६

१३९९ अस्य प्रेषा हेमना पूयमानो देवो देवेभिः समपृक्त रसम् ।
सुतः पवित्रं पर्येति रेभन्मितेव सद्म पशुमन्ति होता ॥ १ ॥ ९।९७।१ ५२६

१४०० भद्रा वस्त्रा समन्या३ वसानो महान्कविर्निवचनानि शंसन् ।
आ वच्यस्व चम्वोः पूयमानो विचक्षणो जागृविर्देववीतौ ॥२॥ ९।९७।२

१४०१ समु प्रियो मृज्यते सानो अव्ये यशस्तरो यशसां क्षैतो अस्मे ।
अभि स्वर धन्वा पूयमानो यूयं पात स्वस्तिभिः सदा नः ॥३॥८(रि)॥
(धा० १६ । उ० नास्ति । स्व० ३) ९।९७।३

१४०२ एतो न्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना । (ऋग्वेदे) (सामवेदे)
शुद्धैरुक्थैर्वावृध्वांसं शुद्धैराशीर्वान्ममत्तु ॥ १ ॥ ८।९५।७ ३५०
१४०३ इन्द्र शुद्धो न आ गहि शुद्धः शुद्धाभिरूतिभिः ।
शुद्धो रयिं नि धारय शुद्धो ममद्धि सोम्य ॥ २ ॥ ८।९५।८
१४०४ इन्द्र शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुषे ।
शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजं सिषाससि ॥ ३ ॥ ९ (यी) ॥ ८।९५।९

॥ इति तृतीय खण्डः ॥ ३ ॥ (धा० १२ । उ० नास्ति । स्व० ४)

१४०५ अग्ने स्तोमं मनामहे सिध्रमद्य दिविस्पृशः ।
देवस्य द्रविणस्यवः ॥ १ ॥ ५।१३।२
१४०६ अग्निर्जुषत नो गिरो होता यो मानुषेष्वा ।
स यक्षद्दैव्यं जनम् ॥ २ ॥ ५।१३।३
१४०७ त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः ।
त्वया यज्ञं वि तन्वते ॥३॥ (धा० १३ । उ० नास्ति । स्व० ३) ॥१०(रि)॥ ५।१३।४

१४०८ अभि त्रिपृष्ठं वृषणं वयोधामङ्गोषिणमवावशंत वाणीः ।
वना वसानो वरुणो न सिन्धुर्वि रत्नधा दयते वार्याणि ॥ १ ॥ ९।९०।२ ५२८
१४०९ शूरग्रामः सर्ववीरः सहावान् जेता पवस्व सनिता धनानि ।
तिग्मायुधः क्षिप्रधन्वा समत्स्वषाढः साह्वान्पृतनासु शत्रून् ॥२॥ ९।९०।३
१४१० उरुगव्यूतिरभयानि कृण्वन्त्समीचीने आ पवस्वा पुरन्धी ।
अपः सिषासन्नुषसः स्वऽ३र्गाः सं चिक्रदो महो अस्मभ्यं वाजान् ॥३॥११(पू)॥
( धा० ३० । उ० १ । स्व० ६ ) ९।९०।४

१४११ त्वमिन्द्र यशा अस्यृजीषी शवसस्पतिः
त्वं वृत्राणि हं स्यप्रतीन्येक इत्पुर्वनुत्तश्चर्षणीधृतिः ॥ १ ॥ ८।९०।५
१४१२ तमु त्वा नूनमसुर प्रचेतसं राधो भागमिवेमहे ।
महीव कृत्तिः शरणा त इन्द्र प्र ते सुम्ना नो अश्नवन् ॥२॥१२(त)॥
(धा० १४ । उ० १ स्व० १ ) ८।९०।६

१४१३ यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम्। (ऋग्वेदे) (सामवेदे)
अस्य यज्ञस्य सुक्रतुम् ॥ १ ॥ ८।१९।३
१४१४ अपां नपातं सुभगं सुदीदितिमग्निमु श्रेष्ठशोचिषम्।
स नो मित्रस्य वरुणस्य सो अपामा सुम्नं यक्षते दिवि ॥२॥१३(ना)॥
( धा० १४ । उ० १ । स्व० २ ) १।२२।७

॥ इति चतुर्थः खण्डः ॥ ५ ॥

१४१५ यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः।
स यन्ता शश्वतीरिषः ॥ १ ॥ १।२७।७
१४१६ न किरस्य सहन्त्य पर्येता कयस्य चित्।
वाजो अस्ति श्रवाय्यः ॥ २ ॥ १।२७।८
१४१७ स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता।
विप्रेभिरस्तु सनिता ॥ ३ ॥ (धा० १८। उ० २ । स्व० २) ॥१४(ठा)॥ १।२७।९

१४१८ साकमुक्षो मर्जयन्त स्वसारो दश धीरस्य धीतयो धनुत्रीः।
हरिः पर्यद्रवज्जाः सूर्यस्य द्रोणं ननक्षे अत्यो न वाजी ॥ १ ॥ ९।९३।१ ५३८
१४१९ सं मातृभिर्न शिशुर्वावशानो वृषा दधन्वे पुरुवारो अद्भिः।
मर्यो न योषामभि निष्कृतं यन्त्सं गच्छते कलश उस्रियाभिः॥२॥ ९।९३।२
१४२० उत प्र पिप्य ऊधरघ्न्याया इन्दुर्धाराभिः सचते सुमेधाः।
मूर्धानं गावः पयसा चमूष्वभि श्रीणन्ति वसुभिर्न निक्तैः ॥३॥१३(वू)॥
(धा० ३० । उ० नास्ति । स्व० ६ ) ९।९३।३

१४२१ पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः।
आपिर्नो बोधि सधमाद्ये वृधे३ ऽस्माँ अवन्तु ते धियः ॥ १ ॥ ८।३।१ २३९
१४२२ भूयाम ते सुमतौ वाजिनो वयं मा न स्तरभिमातये।
अस्माँ चित्राभिरवतादभिष्टिभिरा नः सुम्नेषु यामय ॥२॥१६(ल)॥
( धा० [illegible] । उ० नास्ति । स्व० १ ) ८।३।२

(ऋग्वेदे) (सामवेदे)

१४२३ त्रिरस्मै सप्त धेनवो दुदुह्रिरे सत्यामाशिरं परमे व्योमनि ।
चत्वार्यन्या भुवनानि निर्णिजे चारूणि चक्रे यदृतैरवर्धत ॥ १ ॥ ९।७०।१    ५६०

१४२४ स भिक्षमाणो अमृतस्य चारुण उभे द्यावा काव्येना वि शश्रथे ।
तेजिष्ठा अपो मंहना परि व्यत यदी देवस्य श्रवसा सदो विदुः ॥ २ ॥
९।७०।२

१४२५ ते अस्य सन्तु केतवोऽमृत्यवोऽदाभ्यासो जनुषी उभे अनु ।
येभिर्नृम्णा च देव्या च पुनत आदिद्राजानं मनना अगृभ्णत ॥३॥१७(चे)॥
( धा०३२ । उ०१ । स्व०७ ) ९।७०।३

॥ इति पञ्चमः खण्डः ॥ ५ ॥

१४२६ अभि वायुं वीत्यर्षा गृणानोऽभि मित्रावरुणा पूयमानः ।
अभी नरं धीजवनं रथेष्ठामभीन्द्रं वृषणं वज्रबाहुम् ॥ १ ॥ ९।९७।४९

१४२७ अभि वस्त्रा सुवसनान्यर्षाभि धेनूः सुदुघाः पूयमानः ।
अभि चन्द्रा भर्तवे नो हिरण्याभ्यश्वान्रथिनो देव सोम ॥ १ ॥ ९।९७।५०

१४२८ अभी नो अर्ष दिव्या वसून्यभि विश्वा पार्थिवा पूयमानः ।
अभि येन द्रविणमश्नवामाभ्यार्षेयं जमदग्निवन्नः ॥३॥१८(खे)॥
(धा० २१ । उ०२ । स्व०७) ९।९७।५१

१४२९ यज्जायथा अपूर्व्य मघवन्वृत्रहत्याय ।
तत्पृथिवीमप्रथयस्तदस्तभ्ना उतो दिवम् । ॥ १ ॥ ८।८९।५

१४३० तत्ते यज्ञो अजायत तदर्क उत हस्कृतिः ।
तद्विश्वमभिभूरसि यज्जातं यच्च जन्त्वम् ॥ २ ॥ ८।८९।६

१४३१ आमासु पक्वमैरय आ सूर्यं रोहयो दिवि ।
घर्मं न सामं तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् ॥३॥१९(पे)॥
( धा० ३० । उ० १ । स्व० ७ ) ८।८९।७

१४३२ मत्स्यपायि ते महः पात्रस्येव हरिवो मत्सरो मदः ।
वृषा ते वृष्ण इन्दुर्वाजी सहस्रसातमः । ॥ १ ॥ १।१७५।१

(ऋग्वेदे) (सामवेदे)

१४३३ आ नस्ते गन्तु मत्सरो वृषा मदो वरेण्यः।
सहावाँ इन्द्र सानसिः पृतनाषाडमर्त्यः ॥ २ ॥ ९।१७५।२

१४३४ त्वं हि शूरः सनिता चोदयो मनुषो रथम्।
सहावान्दस्युमव्रतमोषः पात्रं न शोचिषा ॥३॥२०(बि) ९।१७५।३

( धा० २५ । उ० ३ । स्व० ३ )

॥ इति षष्ठ खण्डः ॥ ६ ॥

॥ इति षष्ठप्रपाठके द्वितीयोऽर्धः ॥ ६-२ ॥

॥ इति द्वादशोऽध्यायः समाप्तः ॥ १२ ॥

## अथ त्रयोदशोऽध्यायः।

[ ३ ]

अथ षष्ठप्रपाठके तृतीयोऽर्धः ॥ ६-३ ॥

(१-२०) १ कविर्भार्गवः; २,९,१६ भरद्वाजो बार्हस्पत्यः; ३ आसतः काश्यपो देवलो वा, ४ सुकक्षः आंगिरसः; ५ विभ्राट्सौर्यः; ६,८ वसिष्ठो मैत्रावरुणिः; १०-१७ भार्गवः प्रागाथः; १०, १७ विश्वामित्रो गाथिनः; ११ मेधातिथिः काण्वः; १२ शतं वैखानसाः; १३ यजत आत्रेयः; १४ मधुच्छन्दा वैश्वामित्रः; १५ उशना काव्यः; १८ हर्यतः प्रागाथः; १९ बृहद्दिव आथर्वणः, २० गृत्समदः शौनकः ॥ १, ३, १५ पवमानः सोमः; २,४,६,७, १४,१९,२० इन्द्रः; ८ सरस्वान्; ९ सरस्वती; १० सविता; ११ ब्रह्मणस्पतिः; १२ अग्निः पवमानः; १३ मित्रावरुणौ; १६—१८ अग्निः; १८ हवींषि वा; ५ सूर्यः ॥ १, ३-४, ८-१४,१६ ( २-३ ) १८ गायत्री; २ ( १-३ ) अनुष्टुप् ; २ ( ४ ) बृहती, ६,७ प्रगाथः= (विषमा बृहती, समा सतोबृहती); १६ ( १ ) वर्धमाना, १९ त्रिष्टुप्; २० ( १ ) अष्टिः; २० ( २-३ ) अतिशक्करी; ५ जगती ॥ १५

१४३५ पवस्व वृष्टिमा सु नोऽपामूर्मिं दिवस्परि।
अयक्ष्मा बृहतीरिषः ॥ १ ॥ ९।४९।१

१४३६ तया पवस्व धारया यया गाव इहागमन्।
जन्यास उप नो गृहम् ॥ २ ॥ ९।४९।२

१४३७ घृतं पवस्व धारया यज्ञेषु देववीतमः।
अस्मभ्यं वृष्टिमा पव ॥ ३ ॥ ९।४९।३

१४३८ स न ऊर्जे व्यऽ३व्ययं पवित्रं धाव धारया। (ऋग्वेदे) (सामवेदे)
देवासः शृणवन् हि कम् ॥ ४ ॥ ९।४९।४
१४३९ पवमानो असिष्यदद्रक्षांस्यपजङ्घनत्।
प्रत्नवद्रोचयन्रुचः ॥ ५ ॥ (धा० २२ । उ० १ । स्व० ४) ॥ १ (ची) ॥ ९।४९।५

१४४० प्रत्यस्मै पिपीषते विश्वानि विदुषे भर।
अरङ्गमाय जग्मयेऽपश्चादध्वने नरः ॥ १ ॥ ६।४२।१ ३५२
१४४१ एमेनं प्रत्येतन सोमेभिः सोमपातमम्।
अमत्रेभिर्ऋजीषिणमिन्द्रं सुतेभिरिन्दुभिः ॥ २ ॥ ६।४२।२
१४४२ यदी सुतेभिरिन्दुभिः सोमेभिः प्रतिभूषथ।
वेदा विश्वस्य मेधिरो धृषत्तन्तमिदेषते ॥ ३ ॥ ६।४२।३
१४४३ अस्माअस्मा इदन्धसोऽध्वर्यो प्र भरा सुतम्।
कुवित्समस्य जेन्यस्य शर्धतोऽभिशस्तेरवस्वरत् ॥ ४ ॥ २ (ठ) ॥ ६।४२।४
(धा० २३ । उ० २ । स्व० १)

॥ इति प्रथमः खण्डः ॥ १ ॥

१४४४ बभ्रवे नु स्वतवसेऽरुणाय दिविस्पृशे।
सोमाय गाथमर्चत ॥ १ ॥ ९।११।४
१४४५ हस्तच्युतेभिरद्रिभिः सुतं सोमं पुनीतन।
मधावा धावता मधु ॥ २ ॥ ९।११।५
१४४६ नमसेदुप सीदत दध्नेदभि श्रीणीतन।
इन्दुमिन्द्रे दधातन ॥ ३ ॥ ९।११।६
१४४७ अमित्रहा विचर्षणिः पवस्व सोम शं गवे।
देवेभ्यो अनुकामकृत ॥ ४ ॥ ९।११।७
१४४८ इन्द्राय सोम पातवे मदाय परि षिच्यसे।
मनश्चिन्मनसस्पतिः ॥ ५ ॥ ९।११।८

१४४९ पवमान सुवीर्यं रयिं सोम रिरीहि णः ।
इन्दविन्द्रेण नो युजा ॥ ६ ॥ (धा० ३२ । उ० नास्ति । स्व०६) ॥३(यू)॥ ९।११।९

१४५० उद्घेदभि श्रुतामघं वृषभं नर्यापसम् ।
अस्तारमेषि सूर्य ॥ १ ॥ ८।९३।१ १२५
१४५१ नव यो नवतिं पुरो बिभेद बाह्वोजसा ।
अहिं च वृत्रहावधीत् ॥ २ ॥ ८।९३।२
१४५२ स न इन्द्रः शिवः सखाश्वावद्गोमद्यवमत् ।
उरुधारेव दोहते ॥ ३ ॥ (धा० ९ । उ० १ । स्व० ४) ॥ ४ (ती)॥ ८।९३।३

॥ इति द्वितीयः खण्डः ॥ २ ॥

१४५३ विभ्राड् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् ।
वातजूतो यो अभिरक्षति त्मना प्रजाः पिपर्ति बहुधा वि राजति ॥१॥
१०।१७०।१ ६२८
१४५४ विभ्राड् बृहत्सुभृतं वाजसातमं धर्मं दिवो धरुणे सत्यमर्पितम् ।
अमित्रहा वृत्रहा दस्युहन्तमं ज्योतिर्जज्ञे असुरहा सपत्नहा ॥२॥ १०।१७०।२
१४५५ इदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं विश्वजिद्धनजिदुच्यते बृहत् ।
विश्वभ्राड् भ्राजो महि सूर्यो दृश उरु पप्रथे सह ओजो अच्युतम् ॥३॥५(जि)॥
( धा० २७ । उ० ३ । स्व० ३ ) १०।१७०।३
१४५६ इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥१॥ ७।३२।२६
१४५७ मा नो अज्ञाता वृजना दुराध्यो३ माशिवासोऽव क्रमुः ।
त्वया वयं प्रवतः शश्वतीरपोऽति शूर तरामसि ॥ २ ॥ ६(ल)॥ ७।३२।२७
( धा० ९ । उ० नास्ति । स्व० १ )
१४५८ अद्याद्या श्वःश्व इन्द्र त्रास्व परे च नः ।
विश्वा च नो जरितॄन्त्सत्पते अहा दिवा नक्तं च रक्षिषः ॥१॥ ८।६१।१७

१४५९ प्रभङ्गी शूरो मघवा तुवीमघः सम्मिश्लो वीर्याय कम् । (ऋग्वेदे) (सामवेदे)
उभा ते बाहू वृषणा शतक्रतो नि या वज्रं मिमिक्षतुः ॥२॥७(वी)॥ ८।६१।१८
( धा० १५ । उ० नास्ति । स्व० ४ )

॥ इति तृतीयः खण्डः ॥ ३ ॥

१४६० जनीयन्तो न्वग्रवः पुत्रीयन्तः सुदानवः ।
सरस्वन्तं हवामहे ॥१॥ (धा० ३ । उ० नास्ति । स्व० नास्ति) ॥८(रौ)॥ ७।९६।४

१४६१ उत नः प्रिया प्रियासु सप्तस्वसा सुजुष्टा ।
सरस्वती स्तोम्या भूत् ॥१॥(धा० १। उ० नास्ति । स्व० नास्ति)॥९(हौ)॥ ६।६१।१०

१४६२ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् ॥ १ ॥ ३।६२।१०

१४६३ सोमानां स्वरणं [कृणुहि ब्रह्मणस्पते ।]
[कक्षीवन्तं य औशिजः] ॥ २ ॥ १।१८।१ १३९

१४६४ अग्न आयूंषि पवसे [आसुवोर्जमिषं च नः ।]
[आरे बाधस्व दुच्छुनाम्]॥३॥(धा० २ । उ० नास्ति । स्व० १)॥१०(य)॥९।६६।१९ ६२७; १५१८

१४६५ ता नः शक्तं पार्थिवस्य [महो रायो दिव्यस्य ।]
[महि वा क्षत्रं देवेषु] ॥ १ ॥ ५।६८।३ ११५५

१४६६ ऋतमृतेन सपन्तेषिरं दक्षमाशाते ।
अद्रुहा देवौ वर्धेते ॥ २ ॥ ५।६८।४

१४६७ वृष्टिद्यावा रीत्यापेषस्पती दानुमत्याः ।
बृहन्तं गर्तमाशाते ॥ ३ ॥ ( धा० ५ । उ० १ । स्व० २ ) ॥११(पा)॥ ५।६८।५

१४६८ युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः ।
रोचन्ते रोचना दिवि ॥ १ ॥ १।६।१

१४६९ युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे ।
शोणा धृष्णू नृवाहसा ॥ २ ॥ १।६।२

१४७० केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । (ऋग्वेदे) (सामवेदे)
समुषद्भिरजायथाः ॥ ३ ॥ (धा० ७ । उ० नास्ति । स्व० १) ॥१२(घ)॥ १।६।३

॥ इति चतुर्थः खण्डः ॥ ४ ॥

१४७१ अयं सोम इन्द्र तुभ्यं सुन्वे तुभ्यं पवते त्वमस्य पाहि ।
त्वं ह यं चकृषे त्वं ववृष इन्दुं मदाय युज्याय सोमम् ॥ १ ॥ ९।८८।१
१४७२ स ईं रथो न भुरिषाडयोजि महः पुरूणि सातये वसूनि ।
आदीं विश्वा नहुष्याणि जाता स्वर्षाता वन ऊर्ध्वा नवन्त ॥२॥ ९।८८।२
१४७३ शुष्मी शर्धो न मारुतं पवस्वानभिशस्ता दिव्या यथा विट् ।
आपो न मक्षू सुमतिर्भवा नः सहस्राप्साः पृतनाषाण् न यज्ञः ॥३॥१३(घी)॥
( धा० २६ । उ० ४ । स्व० ४ ) ९।८८।७
१४७४ त्वमग्ने यज्ञानां होता विश्वेषां हितः ।
देवेभिर्मानुषे जने ॥ १ ॥ ६।१६।१ २
१४७५ स नो मन्द्राभिरध्वरे जिह्वाभिर्यजा महः ।
आ देवान्वक्षि यक्षि च ॥ २ ॥ ६।१६।२
१४७६ वेत्था हि वेधो अध्वनः पथश्च देवाञ्जसा ।
अग्ने यज्ञेषु सुक्रतो ॥३॥ (धा० ६ । उ० नास्ति । स्व० नास्ति ) ॥१४(हौ)॥ ६।१६।३
१४७७ होता देवो अमर्त्यः पुरस्तादेति मायया ।
विदथानि प्रचोदयन् ॥ १ ॥ ३।२७।७
१४७८ वाजी वाजेषु धीयतेऽध्वरेषु प्र णीयते ।
विप्रो यज्ञस्य साधनः ॥ २ ॥ ३।२७।८
१४७९ धिया चक्रे वरेण्यो भूतानां गर्भमा दधे ।
दक्षस्य पितरं तना ॥ ३ ॥ (धा० १३ । उ० नास्ति । स्व० २ ) १५(रा)॥ ३।२७।९

॥ इति पञ्चमः खण्डः ॥ ५ ॥

१४८० आ सुते सिञ्चत श्रियं रोदस्योरभिश्रियम् ।
रसा दधीत वृषभम् ॥ १ ॥ ८।७२।१३

१४८१ ते जानत स्वमोक्यं३ सं वत्सासो न मातृभिः । (ऋग्वेदे) (सामवेदे)
मिथो नसन्त जामिभिः ॥ २ ॥ ८।७२।१४
१४८२ उप स्रक्वेषु बप्सतः कृण्वते धरुणं दिवि ।
इन्द्रे अग्ना नमः स्वः ॥ ३ ॥ ( धा० १२ । उ० १ । स्व० १ ) ॥१६(च)॥ ८।७२।१५
१४८३ तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो नि रिणाति शत्रूननु यं विश्वे मदन्त्यूमाः ॥१॥ १०।१२०।१
१४८४ वावृधानः शवसा भूर्योजाः शत्रुर्दासाय भियसं दधाति ।
अव्यनच्च व्यनच्च सस्नि सं ते नवन्त प्रभृता मदेषु ॥ २ ॥ १०।१२०।२
१४८५ त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः ।
स्वादोः स्वादीयः स्वादुना सृजा समदः सु मधु मधुनाभि योधीः॥३॥१७(णी)॥
( धा० २२ । उ० ५ । स्व० ४ ) १०।१२०।३
१४८६ त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृम्पत्सोममपिबद्विष्णुना
सुतं यथावशम् ।
स ईं ममाद महि कर्म कर्तवे महामुरुं सैनं
सश्चद्देवो देवं सत्य इन्दुः सत्यमिन्द्रम् ॥ १ ॥ २।२२।१ ४५७
१४८७ साकं जातः क्रतुना साकमोजसा ववक्षिथ
साकं वृद्धो वीर्यैः सासहिर्मृधो विचर्षणिः ।
दाता राध स्तुवते काम्यं वसु
प्रचेतन सैनं सश्चद्देवो देवं सत्य इन्दुः सत्यमिन्द्रम् ॥ २ ॥ २।२२।३
१४८८ अध त्विषीमाँ अभ्योजसा क्रिविं युधाभवदा
रोदसी अपृणदस्य मज्मना प्र वावृधे ।
अधत्तान्यं जठरे प्रेमरिच्यत प्र चेतय
सैनं सश्चद्देवो देवं सत्य इन्दुः सत्यमिन्द्रम्॥ ३ ॥
( धा० ५४ । उ० २ । स्व० १३ ) ॥ (१८) थि ॥ २।२२।२

॥ इति षष्ठः खण्डः ॥६॥ इति षष्ठप्रपाठकेः तृतीयोऽर्धः षष्ठः प्रपाठकश्च समाप्तः ॥६॥
॥ इति त्रयोदशोऽध्यायः ॥१३॥

# अथ चतुर्दशोऽध्यायः ।

अथ सप्तमप्रपाठके प्रथमोऽर्धः ॥ ७ ॥

( १-१६ ) १, ९ प्रियमेध आङ्गिरसः; २ नृमेध-पुरुमेधावाङ्गिरसौ; ३, ७ त्र्यरुणस्त्रैवृष्णः, त्रसदस्युः पौरुकुत्सः; ४ शुनःशेप आजीगर्तिः; ५ वत्सः काण्वः; ६ अग्निस्तापसः; ८ विश्वमना वैयश्वः; १० वसिष्ठो मैत्रावरुणिः; ११ सौभरिः काण्वः; १२ शतं वैखानसः; १३ वसूयव आत्रेयः; १४ गोतमो राहूगणः; १५ केतुराग्नेयः; १६ विरूप आङ्गिरसः ॥ १-२, ५, ८-२ इन्द्रः; ३, ७ पवमानः सोमः; ४, १०-११, १३-१६ अग्निः; ६ विश्वे देवाः, १२ अग्निः पवमानः ॥ १, ४-५, १२-१६ गायत्री; २, १० प्रगाथः= ( विषमा बृहती, समा सतोबृहती ); ३,७ ऊर्ध्वा बृहती; ६ अनुष्टुप्, ८-९ उष्णिक्; ११ बृहती ॥

१४८९ अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे । (ऋग्वेदे) (सामवेदे)
सूनुं सत्यस्य सत्पतिम् ॥ १ ॥ ८।६९।४ १६८

१४९० आ हरयः ससृज्रिरेऽरुषीरधि बर्हिषि ।
यत्राभि संनवामहे ॥ २ ॥ ८।६९।५

१४९१ इन्द्राय गाव आशिरं दुदुह्रे वज्रिणे मधु ।
यत्सीमुपह्वरे विदत् ॥ ३ ॥ (धा० ११ । उ० नास्ति । स्व० २) ॥१(हा)॥ ८।६९।६

१४९२ आ नो विश्वासु हव्यमिन्द्रं समत्सु भूषत ।
उप ब्रह्माणि सवनानि वृत्रहन्परमज्या ऋचीषम ॥ १ ॥ ८।९०।१ २६९

१४९३ त्वं दाता प्रथमो राधसामस्यसि सत्य ईशानकृत् ।
तुविद्युम्नस्य युज्या वृणीमहे पुत्रस्य शवसो महः ॥२॥ २(या)॥ ८।९०।२
( धा० १७। उ० नास्ति । स्व० २ )

१४९४ प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यं महो गाहाद्दिव आ निरधुक्षत ।
इन्द्रमभि जायमानं समस्वरन् ॥ १ ॥ ९।११०।८

१४९५ आदीं के चित्पश्यमानास आप्यं वसुरुचो दिव्या अभ्यनूषत ।
दिवो न वारं सविता व्यूर्णुते ॥ २ ॥ ९।११०।६

१४९६ अध यदिमे पवमान रोदसी इमा च विश्वा भुवनाभि मज्मना। (ऋग्वेदे)(सामवेदे)
यूथे न निष्ठा वृषभो वि राजसि ॥ ३ ॥ ३(खू)॥  ९।११०।९
( धा० १६ । उ० २ । स्व०६ )

१४९७ इममू षु त्वमस्माकं सनिं गायत्रं नव्यांसम् ।
अग्ने देवेषु प्र वोचः ॥ १ ॥  १।२७।४  २८

१४९८ विभक्तासि चित्रभानो सिन्धोरूर्मा उपाक आ ।
सद्यो दाशुषे क्षरसि ॥ २ ॥  १।२७।६

१४९९ आ नो भज परमेष्वा वाजेषु मध्यमेषु ।
शिक्षा वस्वो अन्तमस्य ॥ ३ ॥ ( धा० १३ । उ० १ । स्व० २ ) ॥४(टा)॥ १।२७।५

१५०० अहमिद्धि पितुष्परि मेधामृतस्य जग्रह ।
अहं सूर्य इवाजनि ॥ १ ॥  ८।६।१०  १५२

१५०१ अहं प्रत्नेन जन्मना गिरः शुम्भामि कण्ववत् ।
येनेन्द्रः शुष्ममिद्दधे ॥ २ ॥  ८।६।११

१५०२ ये त्वामिन्द्र न तुष्टुवुर्ऋषयो ये च तुष्टुवुः ।
ममेद्वर्धस्व सुष्टुतः ॥ ३ ॥ ( धा० १४ । उ० २ । स्व० ५ ) ॥ ५ (थु)॥  ८।६।१२

॥ इति प्रथमः खण्डः ॥१॥

१५०३ अग्ने विश्वेभिरग्निभिर्जोषि ब्रह्म सहस्कृत ।
ये देवत्रा य आयुषु तेभिर्नो महया गिरः ॥ १ ॥  ( न ऋग्वेदीयः )

१५०४ प्र स विश्वेभिरग्निभिरग्निः स यस्य वाजिनः ।
तनये तोके अस्मदा सम्यङ्वाजैः परीवृतः ॥ २ ॥  ( न ऋग्वेदीयः )

१५०५ त्वं नो अग्ने अग्निभिर्ब्रह्म यज्ञं च वर्धय ।
त्वं नो देवतातये रायो दानाय चोदय ॥ ३ ॥ ६ (डि) ॥  १०।१४१।६
(धा० १८ । उ० ३ । स्व० ३)

१५०६ त्वे सोम प्रथमा वृक्तबर्हिषो महे वाजाय श्रवसे धियं दधुः ।
स त्वं नो वीर वीर्याय चोदय ॥ १ ॥  ९।११०।७

(ऋग्वेदे)(सामवेदे)

१५०७ अभ्यभि हि श्रवसा ततर्दिथोत्सं न कं चिज्जनपानमक्षितम् ।
शर्याभिर्न भरमाणो गभस्त्योः ॥ २ ॥ ९।११०।५

१५०८ अजीजनो अमृत मर्त्याय कमृतस्य धर्मन्नमृतस्य चारुणः ।
सदासरो वाजमच्छा सनिष्यदत् ॥ ३ ॥ ७ (ले) ॥ ९।११०।४

(धा० १० । उ० नास्ति । स्व० ७)

१५०९ एन्दुमिन्द्राय सिञ्चत पिबाति सोम्यं मधु ।
प्र राधांसि चोदयते महित्वना ॥ ॥ ८।२४।१३ ३८६

१५१० उपो हरीणां पतिं राधः पृञ्चन्तमब्रवम् ।
नूनं श्रुधि स्तुवतो अश्व्यस्य ॥ २ ॥ ८।२४।१४

१५११ न ह्यं३ग पुरा च न जज्ञे वीरतरस्त्वत् ।
न की राया नैवथा न भन्दना ॥ ३ ॥ ८ (चा) ॥ ८।२४।१५

(धा० १७ । उ० १ । स्व० २)

१५१२ नदं व ओदतीनां नदं योयुवतीनाम् ।
पतिं वो अघ्न्यानां धेनूनामिषुध्यसि ॥ १ ॥ ९ (व) ॥ ८।६९।२

( धा० ५ । उ० नास्ति । स्व० १)

॥ इति द्वितीयः खण्डः ॥ २ ॥

१५१३ देवो वो द्रविणोदाः पूर्णां विवष्ट्वासिचम् ।
उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहते ॥ १ ॥ ७।१६।११ ५५

१५१४ तं होतारमध्वरस्य प्रचेतसं वह्निं देवा अकृण्वत ।
दधाति रत्नं विधते सुवीर्यमग्निर्जनाय दाशुषे ॥२॥१०(लि)॥ ७।१६।१२

(धा० १४ । उ० ना० । स्व० ३)

१५१५ अदर्शि गातुवित्तमो यस्मिन्व्रतान्यादधुः ।
उपो षु जातमार्यस्य वर्धनमग्निं नक्षन्तु नो गिरः ॥ १ ॥ ८।१०३।१ ४७

१५१६ यस्माद्रेजन्त कृष्टयश्चर्कृत्यानि कृण्वतः ।
सहस्रसां मेधसाताविव त्मनाग्निं धीभिर्नमस्यत ॥ २ ॥ ८।१०३।२

१५१७ प्र दैवोदासो अग्निर्[देव इन्द्रो न मज्मना ।] (ऋग्वेदे) (सामवेदे)
[अनु मातरं पृथिवीं वि वावृते तस्थौ नाकस्य शर्मणि] ॥३॥११(हा)॥
( धा० १६ । उ० नास्ति । स्व० २ ) ८।१०३।२ ५१

१५१८ अग्न आयूंषि पवस [आसुवोर्जमिषं च नः ।] ६२७;
[आरे बाधस्व दुच्छुनाम्] ॥ १ ॥ ९।६६।१९ १४६४
१५१९ अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः ।
तमीमहे महागयम् ॥ २ ॥ ९।६६।२०
१५२० अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् ।
दधद्रयिं मयि पोषम् ॥ ३ ॥ (धा० १० । उ० २ । स्व० १) १२ (फ)॥ ९।६६।२१

१५२१ अग्ने पावक रोचिषा मन्द्रया देव जिह्वया ।
आ देवान्वक्षि यक्षि च ॥ १ ॥ ५।२६।१
१५२२ तं त्वा घृतस्नवीमहे चित्रभानो स्वर्दृशम् ।
देवाँ आ वीतये वह ॥ २ ॥ ५।२६।२
१५२३ वीतिहोत्रं त्वा कवे द्युमन्तं समिधीमहि ।
अग्ने बृहन्तमध्वरे ॥ ३॥ (धा० १८। उ० १। स्व० नास्ति ।)॥१३(टौ)॥५।२६।३

॥ इति तृतीयः खण्डः ॥ ३ ॥

१५२४ अवा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि ।
विश्वासु धीषु वन्द्य ॥ १ ॥ १।७९।७
१५२५ आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम् ।
विश्वासु पृत्सु दुष्टरम् ॥ २ ॥ १।७९।८
१५२६ आ नो अग्ने सुचेतुना रयिं विश्वायुपोषसम् ।
मार्डीकं धेहि जीवसे ॥३॥ (धा० १५ । उ० नास्ति । स्व० नास्ति) ॥१४(वौ)॥ १।७९।९

१५२७ अग्निं हिन्वन्तु नो धियः सप्तिमाशुमिवाजिषु । (ऋग्वेदे) (सामवेदे)
तेन जेष्म धनंधनम् ॥ १ ॥ १०।१५६।१

१५२८ यया गा आकरामहै सेनयाग्ने तवोत्या ।
तां नो हिन्व मघत्तये ॥ २ ॥ १०।१५६।२

१५२९ आग्ने स्थूरं रयिं भर पृथुं गोमन्तमश्विनम् ।
अङ्धि खं वर्तया पविम् ॥ ३ ॥ १०।१५६।३

१५३० अग्ने नक्षत्रमजरमा सूर्यं रोहयो दिवि ।
दधज्ज्योतिर्जनेभ्यः ॥ ४ ॥ १०।१५६।४

१५३१ अग्ने केतुर्विशामसि प्रेष्ठः श्रेष्ठ उपस्थसत् ।
बोधा स्तोत्रे वयो दधत् ॥५॥ (धा० १९। उ० २ । स्व० २) ॥१५(था)॥ १०।१५६।५

१५३२ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् ।
अपां रेतांसि जिन्वति ॥ १ ॥ ८।४४।१६

१५३३ ईशिषे वार्यस्य हि दात्रस्याग्ने स्वःपतिः ।
स्तोता स्यां तव शर्मणि ॥ २ ॥ ८।४४।१८

१५३४ उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते ।
तव ज्योतींष्यर्चयः ॥३॥ (धा० ४ । उ० नास्ति । स्व० ४)॥१६(ली)॥ ८।४४।१७

॥ इति चतुर्थः खण्डः ॥ ४ ॥

॥ इति सप्तमप्रपाठके प्रथमोऽर्धः॥ ७-१ ॥

॥ इति चतुर्दशोऽध्यायः ॥ १४ ॥

# अथ पञ्चदशोऽध्यायः ।

[ २ ]

अथ सप्तमप्रपाठके द्वितीयोऽर्धः ॥ ७-२ ॥

( १-१४ ) १, ११ गोतमो राहूगणः; २, ९ विश्वामित्रो गाथिनः; ३ विरूप आङ्गिरसः; ४, ७ भर्गः प्रागाथः, ५ त्रित आप्त्यः; १० सोभरिः काण्वः; १२ गोपवन आत्रेयः; १३ भरद्वाजो बार्हस्पत्यो, वीतहव्य आङ्गिरसो वा; १३ प्रयोगो भार्गवः; पावकोऽग्निर्बार्हस्पत्यो वा, गृहपति-यविष्ठौ सहसः पुत्रवान्यतरो वा ॥ अग्निः ॥ १-३, ६, ९, १४ गायत्री; ४, ७, ८ प्रगाथः= ( विषमा बृहती, समा सतोबृहती ); ५ त्रिष्टुप्; १० काकुभः प्रगाथः= ( विषमा ककुप्, समा सतोबृहती ); ११ उष्णिक्; १२ अनुष्टुम्मुखः प्रगाथः = ( अनुष्टुप्+गायत्र्यौ ); १३ जगती ॥

१५३५ कस्ते जामिर्जनानामग्ने को दाश्वध्वरः । (ऋग्वेदे) (सामवेदे)
को ह कस्मिन्नसि श्रितः ॥ १ ॥ १।७५।३

१५३६ त्वं जामिर्जनानामग्ने मित्रो असि प्रियः ।
सखा सखिभ्य ईड्यः ॥ २ ॥ १।७५।४

१५३७ यजा नो मित्रावरुणा यजा देवाँ ऋतं बृहत् ।
अग्ने यक्षि स्वं दमम् ॥ ३ ॥ (धा० ८ । उ० नास्ति । स्व० ५) ॥ १(रु) ॥ १।७५।५

१५३८ ईडेन्यो नमस्यस्तिरस्तमांसि दर्शतः ।
समग्निरिध्यते वृषा ॥ १ ॥ ३।२७।१३

१५३९ वृषो अग्निः समिध्यतेऽश्वो न देववाहनः ।
तं हविष्मन्त ईडते ॥ २ ॥ ३।२७।१४

१५४० वृषणं त्वा वयं वृषन्वृषणः समिधीमहि ।
अग्ने दीद्यतं बृहत् ॥ ३ ॥ (धा० ९ । उ० नास्ति । स्व० ३) ॥ २(लि)॥ ३।२७।१५

१५४१ उत्ते बृहन्तो अर्चयः समिधानस्य दीदिवः ।
अग्ने शुक्रास ईरते ॥ १ ॥ ८।४४।४

१५४२ उप त्वा जुह्वो३ मम घृताचीर्यन्तु हर्यत ।
अग्ने हव्या जुषस्व नः ॥ २ ॥ ८।४४।५



१५४३ मन्द्रं होतारमृत्विजं चित्रभानुं विभावसुम्। (ऋग्वेदे) (सामवेदे)
अग्निमीडे स उ श्रवत् ॥३॥ (धा० ६। उ० नास्ति। स्व० १)॥३(ह)॥ ८।४४।६

१५४४ पाहि नो अग्न एकया पाह्युऽत द्वितीयया।
पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो ॥ १ ॥ ८।६०।९ ३६
१५४५ पाहि विश्वस्माद्रक्षसो अराव्णः प्र स्म वाजेषु नोऽव।
त्वामिद्धि नेदिष्ठं देवतातय आपिं नक्षामहे वृधे ॥२॥४(यि)॥ ८।६०।१०
( धा० १७। उ० नास्ति। स्व० ३ )

॥ इति प्रथमः खण्डः ॥ १ ॥

१५४६ इनो राजन्नरतिः समिद्धो रौद्रो दक्षाय सुषुमाँ अदर्शि।
चिकिद्वि भाति भासा बृहतासिक्नीमेति रुशतीमपाजन् ॥१॥ १०।३।१
१५४७ कृष्णां यदेनीमभि वर्पसाभूज्जनयन्योषां बृहतः पितुर्जाम्।
ऊर्ध्वं भानुं सूर्यस्य स्तभायन् दिवो वसुभिररतिर्वि भाति ॥२॥ १०।३।२
१५४८ भद्रो भद्रया सचमान आगात्स्वसारं जारो अभ्येति पश्चात्।
सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्रुशद्भिर्वर्णैरभि राममस्थात् ॥३॥५(यो)॥ १०।३।३
( धा० २७। उ० नास्ति। स्व० ९ )

१५४९ कया ते अग्ने अङ्गिर ऊर्जो नपादुपस्तुतिम्।
वराय देव मन्यवे ॥ १ ॥
८।८४।४
१५५० दाशेम कस्य मनसा यज्ञस्य सहसो यहो।
कदु वोच इदं नमः ॥ २ ॥
८।८४।५
१५५१ अधा त्वं हि नस्करो विश्वा अस्मभ्यं सुक्षितीः।
वाजद्रविणसो गिरः ॥ ३ ॥ (धा० १८। उ० १। स्व० १) ॥ ६ (ट) ॥ ८।८४।६

१५५२ अग्न आ याह्यग्निभिर्होतारं त्वा वृणीमहे।
आ त्वामनक्तु प्रयता हविष्मती यजिष्ठं बर्हिरासदे ॥ १ ॥ ८।६०।१

१५५३ अच्छा हि त्वा सहसः सूनो अङ्गिरः स्रुचश्चरन्त्यध्वरे । (ऋग्वेदे) (सामवेदे)
ऊर्जो नपातं घृतकेशमीमहेऽग्निं यज्ञेषु पूर्व्यम् ॥ २ ॥ ७(या) ॥ ८।६०।२
( धा० १७ । उ० नास्ति । स्व० २ )

१५५४ अच्छा नः शीरशोचिषं गिरो यन्तु दर्शतम् ।
अच्छा यज्ञासो नमसा पुरूवसुं पुरुप्रशस्तमूतये ॥ १ ॥ ८।७१।१०

१५५५ अग्निं सूनुं सहसो जातवेदसं दानाय वार्याणाम् ।
द्विता यो भूदमृतो मर्त्येष्वा होता मन्द्रतमो विशि ॥२॥८(टा)॥ ८।७१।११
( धा० ८ । उ० १ । स्व० २ )

॥ इति द्वितीयः खण्डः ॥२॥

१५५६ अदाभ्यः पुरएता विशामग्निर्मानुषीणाम् ।
तूर्णी रथः सदा नवः ॥ १ ॥ ३।११।५

१५५७ अभि प्रयांसि वाहसा दाश्वाँ अश्नोति मर्त्यः ।
क्षयं पावकशोचिषः ॥ २ ॥ ३।११।७

१५५८ साह्वान्विश्वा अभियुजः क्रतुर्देवानाममृक्तः ।
अग्निस्तुविश्रवस्तमः ॥ ३ ॥ ॥ ९(वि)॥ ३।११।६
(धा० १० । उ० नास्ति । स्व० ३)

१५५९ भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः ।
भद्रा उत प्रशस्तयः ॥ १ ॥ ८।१९।१९ १११

१५६० भद्रं मनः कृणुष्व वृत्रतूर्ये येना समत्सु सासहिः ।
अव स्थिरा तनुहि भूरि शर्धतां वनेमा ते अभिष्टये ॥२॥(लि)॥ ८।१९।२०
( धा० ४ । उ० नास्ति । स्व० ३ )

१५६१ अग्ने वाजस्य गोमत ईशानः सहसो यहो ।
अस्मे देहि जातवेदो महि श्रवः ॥ १ ॥ १।७९।४ ९९

१५६२ स इधानो वसुष्कविरग्निरीडेन्यो गिरा ।
रेवदस्मभ्यं पुर्वणीक दीदिहि ॥ २ ॥ १।७९।५

१५६३ क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः । (ऋग्वेदे) (सामवेदे)
स तिग्मजम्भ रक्षसो दह प्रति ॥३(टा)११॥(धा०१३। उ० १। स्व०२)१।७९।६

॥ इति तृतीयः खण्डः ॥ ३ ॥

१५६४ विशोविशो वो अतिथिं वाजयन्तः पुरुप्रियम् ।
अग्निं वो दुर्यं वच स्तुषे शूषस्य मन्मभिः ॥ १ ॥ ८।७४।१ ८७
१५६५ यं जनासो हविष्मन्तो मित्रं न सर्पिरासुतिम् ।
प्रशंसन्ति प्रशस्तिभिः ॥ २ ॥ ८।७४।२
१५६६ पन्यांसं जातवेदसं यो देवतात्युद्यता ।
हव्यान्यैरयद्दिवि ॥ ३ ॥ ( धा० १३ । उ० १ । स्व० २ ) ॥ १२(टा)॥ ८।७४।३
१५६७ समिद्धमग्निं समिधा गिरा गृणे शुचिं पावकं पुरो अध्वरे ध्रुवम् ।
विप्रं होतारं पुरुवारमद्रुहं कविं सुम्नैरीमहे जातवेदसम् ॥ १ ॥ ६।१५।७
१५६८ त्वां दूतमग्ने अमृतं युगेयुगे हव्यवाहं दधिरे पायुमीड्यम् ।
देवासश्च मर्तासश्च जागृविं विभुं विश्पतिं नमसा नि षेदिरे ॥२॥ ६।१५।८
१५६९ विभूषन्नग्न उभयाँ अनु व्रता दूतो देवानां रजसी समीयसे ।
यत्ते धीतिं सुमतिमावृणीमहेऽध स्म नस्त्रिवरूथः शिवो भव ॥३॥१३(या)॥
(धा० २२ । उ० नास्ति । स्व० २) ६।१५।९
१५७० उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः ।
वायोरनीके अस्थिरन् ॥ १ ॥ ८।१०२।१३ १३
१५७१ यस्य त्रिधात्ववृतं बर्हिस्तस्थावसन्दिनम् ।
आपश्चिन्नि दधा पदम् ॥ २ ॥ ८।१०२।१४
१५७२ पदं देवस्य मीढुषोऽनाधृष्टाभिरूतिभिः ।
भद्रा सूर्य इवोपदृक् ॥३॥ (धा० १६ । उ० नास्ति । स्व० ५)॥१४(हु)॥ ८।१०२।१५

॥ इति चतुर्थः खण्डः ॥ ४ ॥

॥ इति सप्तमप्रपाठके द्वितीयोऽर्धः ॥ ७-२ ॥

॥ इति पञ्चदशोऽध्यायः समाप्तः ॥ १५ ॥

# अथ षोडशोऽध्यायः ।

[ ३ ]

अथ सप्तमप्रपाठके तृतीयोऽर्धः ॥ ७-३ ॥

( १-२१ ) १, ८, १८, मेध्यातिथिः काण्वः; २ विश्वामित्रो गाथिनः; ३-४ भर्गः प्रागाथः; ५ सोभरिः काण्वः; ६, १५ शुनःशेप आजीगर्तिः; ७ सुकक्ष आङ्गिरसः; ९ विश्वकर्मा भौवनः; १० अनानतः पारुच्छेपिः; ११ भरद्वाजो बार्हस्पत्यः; १२ गोतमो राहूगणः; १३ ऋजिश्वा भारद्वाजः; १४ वामदेवो गौतमः; १७ देवातिथिः काण्वः; १९ वालखिल्यः ( श्रुष्टिगुः काण्वः ); २० पर्वतनारदौ; २१ अत्रिर्भौमः ॥ १, ३-४, ७-८, १५, १७-१९ इन्द्रः; २ इन्द्राग्नी; ६ वरुणः; ९ विश्वकर्मा; १०, २०, २१ पवमानः सोमः; ११ पूषा; १२ मरुतः; १३ विश्वे देवाः; १४ द्यावापृथिवी, १६ अग्निः हवींषि वा ॥ १, ३-५, ८, १७-१९ प्रगाथः=( विषमा बृहती, समा सतो-बृहती ); २, ६-७, ११-१६ गायत्री; ९ त्रिष्टुप्, १० अत्यष्टिः; २० उष्णिक्; २१ जगती ॥

१५७३ अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः । (ऋग्वेदे) (सामवेदे)
समीचीनास ऋभवः समस्वरन्रुद्रा गृणन्त पूर्व्यम् ॥ १ ॥ ८।३।७ २५६

१५७४ अस्येदिन्द्रो वावृधे वृष्ण्यं शवो मदे सुतस्य विष्णवि ।
अद्या तमस्य महिमानमायवोऽनु ष्टुवन्ति पूर्वथा ॥ २॥१(रि) । ८।३।८
( धा० १८ । उ० नास्ति । स्व० ३ )

१५७५ प्र वामर्चन्त्युक्थिनो नीथाविदो जरितारः ।
इन्द्राग्नी इष आ वृणे ॥ १ ॥ ३।१२।५ १७०३

१५७६ इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् ।
साकमेकेन कर्मणा ॥ २ ॥ ३।१२।६ १७०४

१५७७ इन्द्राग्नी अपसस्पर्युप प्र यन्ति धीतयः ।
ऋतस्य पथ्या३ अनु ॥ ३ ॥ ३।१२।७ १६९४

१५७८ इन्द्राग्नी तविषाणि वां सधस्थानि प्रयांसि च ।
युवोरप्तूर्यं हितम् ॥ ४ ॥ (धा० १३ । उ० १ । स्व० २) ॥ २(टा) ॥ ३।१२।८ १६९५

१५७९ शग्ध्यू३ षु शचीपत इन्द्र विश्वाभिरूतिभिः ।
भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥ १ ॥ ८।६१।५ २५३

(ऋग्वेदे) (सामवेदे)

१५८० पौरो अश्वस्य पुरुकृद्गवामस्युत्सो देव हिरण्ययः।
न किर्हि दानं परि मर्धिषत्वे यद्यद्यामि तदा भर ॥ २॥३(चु) ॥ ८।६१।६
( धा० १७। उ० १। स्व० ५)

१५८१ त्वं ह्येहि चेरवे विदा भगं वसुत्तये।
उद्वावृषस्व मघवन्गविष्टय उदिन्द्राश्वमिष्टये ॥ १ ॥ ८।६१।७ २४०

१५८२ त्वं पुरू सहस्राणि शतानि च यूथा दानाय मंहसे।
आ पुरंदरं चकृम विप्रवचस इन्द्रं गायन्तोऽवसे ॥ २॥४(फौ) ॥ ८।६१।८
( धा० १५। उ० २। स्व० नास्ति )

१५८३ यो विश्वा दयते वसु होता मन्द्रो जनानाम्।
मघोर्न पात्रा प्रथमान्यस्मै प्र स्तोमा यन्त्वग्नये ॥ १ ॥ ८।१०३।६ ४४

१५८४ अश्वं न गीर्भी रथ्यं सुदानवो मर्मृज्यन्ते देवयवः।
उभे तोके तनये दस्म विश्पते पर्षि राधो मघोनाम् ॥ २॥५(पु) ॥ ८।१०३।७
( धा० १५। उ० १। स्व० ५ )

॥ इति प्रथमः खण्डः ॥१॥

१५८५ इमं मे वरुण श्रुधी हवमद्या च मृडय।
त्वामवस्युरा चके ॥ १ ॥ (धा० ५। उ० नास्ति स्व० १) ॥६(व)॥ १।२५।१९

१५८६ कया त्वं न ऊत्याभि प्र मन्दसे वृषन्।
कया स्तोतृभ्य आ भर॥१॥ (धा० २। उ० नास्ति। स्व० १)॥७(य)॥ ८।९३।१९

१५८७ इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे।
इन्द्रं समीके वनिनो हवामह इन्द्रं धनस्य सातये ८।३।५ २४१

१५८८ इन्द्रो मह्ना रोदसी पप्रथच्छव इन्द्रः सूर्यमरोचयत्।
इन्द्रे ह विश्वा भुवनानि येमिर इन्द्रे स्वानास इन्दवः ॥ २ ॥८(वा) ॥
( धा० १५। उ० नास्ति। स्व० २ ) ८।३।६

१५८९ विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व तन्वं३ स्वा हि ते।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥१॥९(ला)॥
(धा० [illegible] उ० नास्ति। स्व० २ ) १०।८१।६

(ऋग्वेदे) (सामवेदे)

१५९० अया रुचा हरिण्या पुनानो विश्वा द्वेषांसि तरति
सयुग्वभिः सूरो न सयुग्वभिः।
धारा पृष्ठस्य रोचते पुनानो अरुषो हरिः।
विश्वा यद्रूपा परियास्यृक्वभिः सप्तास्येभिर्ऋक्वभिः॥ १ ॥ ९।१११।१ ४६३

१५९१ प्राचीमनु प्रदिशं याति चेकितत्सं रश्मिभिर्यतते दर्शतो
रथो दैव्यो दर्शतो रथः।
अग्मन्नुक्थानि पौंस्येन्द्रं जैत्राय हर्षयन्।
वज्रश्च यद्भवथो अनपच्युता समत्स्वनपच्युता॥ २ ॥ ९।१११।३

१५९२ त्वं ह त्यत्पणीनां विदो वसु सं मातृभिर्मर्जयसि स्व आ दम
ऋतस्य धीतिभिर्दमे।
परावतो न साम तद्यत्रा रणन्ति धीतयः।
त्रिधातुभिररुषीभिर्वयो दधे रोचमानो वयो दधे ॥३॥ १०(ङे)॥ ९।१११।२
( धा० ५१। उ० ५। स्व० ७)

॥ इति द्वितीयः खण्डः ॥ २॥

१५९३ उत नो गोषणिं धियमश्वसां वाजसामुत।
नृवत्कृणुह्यूतये॥ (धा० २। उ० नास्ति। स्व०नास्ति)॥ ११(यौ)॥ ६।५३।१०

१५९४ शशमानस्य वा नरः स्वेदस्य सत्यशवसः।
विदा कामस्य वेनतः॥ (धा० ५। उ० नास्ति। स्व० १) ॥१२(व)॥ १।८६।८

१५९५ उप नः सूनवो गिरः शृण्वन्त्वमृतस्य ये।
सुमृडीका भवन्तु नः॥ (धा० ३। उ० नास्ति। स्व० नास्ति) ॥१३(रौ)॥ ६।५२।९

१५९६ प्र वां महि द्यवी अभ्युपस्तुतिं भरामहे।
शुची उप प्रशस्तये॥ १ ॥ ४।५६।५

१५९७ पुनाने तन्वा मिथः स्वेन दक्षेण राजथः।
ऊह्याथे सनादृतम्॥ २ ॥ ४।५६।६

(ऋग्वेदे) (सामवेदे)

१५९८ महीं मित्रस्य साधथस्तरन्ती पिप्रती ऋतम् ।
परि यज्ञं नि षेदथुः ॥३॥ ( धा० ६ । उ० १ । स्व० २ ) ॥१४(का)॥ ४।५६।७

१५९९ अयमु ते समतसि कपोत इव गर्भधिम् ।
वचस्तच्चिन्न ओहसे ॥ १ ॥ १।३०।४ १८३

१६०० स्तोत्रं राधानां पते गिर्वाहो वीर यस्य ते ।
विभूतिरस्तु सूनृता ॥ २ ॥ १।३०।५

१६०१ ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन्वाजे शतक्रतो ।
समन्येषु ब्रवावहै ॥ ३ ॥ ( धा० १६ । उ० नास्ति । स्व० १ ) ॥१५(ह)॥ १।३०।६

१६०२ गाव उप वदावटे मही यज्ञस्य रप्सुदा ।
उभा कर्णा हिरण्यया ॥ १ ॥ ८।७२।१२ ११७

१६०३ अभ्यारमिदद्रयो निषिक्तं पुष्करे मधु ।
अवटस्य विसर्जने ॥ २ ॥ ८।७२।११

१६०४ सिञ्चन्ति नमसावटमुच्चाचक्रं परिज्मानम् ।
नीचीनबारमक्षितम् ॥ ३॥ ( धा० ८ । उ० नास्ति । स्व० २ ) ॥१६(रा) ८।७२।१०

॥ इति तृतीयः खण्डः ॥ ३ ॥

१६०५ मा भेम मा श्रमिष्मोग्रस्य सख्ये तव ।
महत्ते वृष्णो अभिचक्ष्यं कृतं पश्येम तुर्वशं यदुम् ॥ १ ॥ ८।४।७

१६०६ सव्यामनु स्फिग्यं वावसे वृषा न दानो अस्य रोषति ।
मध्वा संपृक्ताः सारघेण धेनवस्तूयमेहि द्रवा पिब ॥२॥१७(वी)॥ ८।४।८
( धा० १० । उ० नास्ति । स्व० ४ )

१६०७ इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम ।
पावकवर्णाः शुचयो विपश्चितोऽभि स्तोमैरनूषत ॥ १ ॥ ८।३।३ २५०

१६०८ अयं सहस्रमृषिभिः सहस्कृतः समुद्र इव पप्रथे । (ऋग्वेदे) (सामवेदे)
सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये ॥२॥१८(रि)॥
(धा० १८। उ० नास्ति। स्व० ३) ८।३।४

१६०९ यस्यायं विश्व आर्यो दासः शेवधिपा अरिः ।
तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत्सो अज्यते रयिः ॥ १ ॥ ८।५१।९

१६१० तुरण्यवो मधुमन्तं घृतश्चुतं विप्रासो अर्कमानृचुः ।
अस्मे रयिः पप्रथे वृष्ण्यं शवोऽस्मे स्वानास इन्दवः ॥ २ ॥ १९(त)॥
(धा० १४। उ० १। स्व० १) ८।५१।१०

१६११ गोमन्न इन्दो अश्ववत्सुतः सुदक्ष धनिव ।
शुचिं च वर्णमधि गोषु धारय ॥ १ ॥ ९।१०५।४ ५७४

१६१२ स नो हरीणां पत इन्दो देवप्सरस्तमः ।
सखेव सख्ये नर्यो रुचे भव ॥ २ ॥ ९।१०५।५

१६१३ सनेमि त्वमस्मदा अदेवं कं चिदत्रिणम् ।
साह्वाँ इन्दो परि बाधो अप द्वयुम् ॥३॥२० (ल)॥ ९।१०५।६
(धा० ९। उ० नास्ति। स्व०१)

१६१४ अञ्जते व्यञ्जते समञ्जते क्रतुं रिहन्ति मध्वाभ्यञ्जते ।
सिन्धोरुच्छ्वासे पतयन्तमुक्षणं हिरण्यपावाः पशुमप्सु गृभ्णते ॥१॥
९।८६।४३ ५६४

१६१५ विपश्चिते पवमानाय गायत मही न धारात्यन्धो अर्षति ।
अहिर्न जूर्णामति सर्पति त्वचमत्यो न क्रीडन्नसरद्वृषा हरिः ॥२॥ ९।८६।४४

१६१६ अग्रेगो राजाप्यस्तविष्यते विमानो अह्नां भुवनेष्वर्पितः ।
हरिर्घृतस्नुः सुदृशीको अर्णवो ज्योतीरथः पवते राय ओक्यः ॥३॥२ (ले)॥
(धा० ३९। उ० नास्ति। स्व० ७) ९।८६।४५

॥ इति चतुर्थः खण्डः ॥ ४ ॥

॥ इति सप्तमप्रपाठकस्य तृतीयोऽर्धः, सप्तमः प्रपाठकश्च समाप्तः ॥ ७-३ ॥

॥ इति षोडशोऽध्यायः ॥ १६ ॥

❀

# अथ सप्तदशोऽध्यायः ।

[१]

अथाष्टमप्रपाठके प्रथमोऽर्धः ॥ ८-१ ॥

(१-१४) १, ७ शुनःशेप आजीगर्तिः; २ मधुच्छन्दा वैश्वामित्रः; ३ शंयुर्बार्हस्पत्यः; (तृणपाणिः) ४ वसिष्ठो मैत्रावरुणिः; ५ वामदेवो गौतमः; ६ रेभसूनू काश्यपौ; ८ नृमेध आंगिरसः; ९, ११ गोषूक्त्यश्वसूक्तिनौ काण्वायनौ; १० श्रुतकक्षः सुकक्षो वा आङ्गिरसः; १२ विरूप आंगिरसः; १३ वत्सः काण्वः ॥ १, ३, ७, १२ अग्निः २, ८—११, १३ इन्द्रः; ४ विष्णुः; ५ (१) वायु, ५ (२-३) इन्द्रवायू; ६ पवमानः सोमः॥ १-२,७,९, १०, १२, १३ गायत्री; ३, ८ प्रगाथः = (विषमा बृहती, समा सतोबृहती); ४ त्रिष्टुप्; ५, ६ अनुष्टुप्; ११ उष्णिक् ।

१६१७ विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः । (ऋग्वेदे) (सामवेदे)
चनो धाः सहसो यहो ॥ १ ॥ १।२६।१०
१६१८ यच्चिद्धि शश्वता तना देवंदेवं यजामहे ।
त्वे इद्धूयते हविः ॥ २ ॥ १।२६।६
१६१९ प्रियो नो अस्तु विश्पतिर्होता मन्द्रो वरेण्यः ।
प्रियाः स्वग्नयो वयम् ॥३॥ (धा० ११ । उ० नास्ति । स्व० ४)॥१(ही)॥ १।२६।७
१६२० इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः ।
अस्माकमस्तु केवलः ॥ १ ॥ १।७।१०
१६२१ स नो वृषन्नमुं चरुं सत्रादावन्नपा वृधि ।
अस्मभ्यमप्रतिष्कुतः ॥ २ ॥ १।७।६
१६२२ वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा ।
ईशानो अप्रतिष्कुतः ॥ ३ ॥ (धा० ८ । उ० नास्ति । स्व० १)॥२(र)॥ १।७।८
१६२३ त्वं नश्चित्र ऊत्या वसो राधांसि चोदय ।
अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः ॥१॥ ६।४८।९ ४१
१६२४ पर्षि तोकं तनयं पर्तृभिष्ट्वमदब्धैरप्रयुत्वभिः ।
अग्ने हेडांसि दैव्या युयोधि नोऽदेवानि ह्वरांसि च ॥२॥३(की)॥ ६।४८।१०
(धा० ११ । उ० १ । स्व० ४)

१६२५ किमित्ते विष्णो परिचक्षि नाम प्र यद्ववक्षे शिपिविष्टो अस्मि । (ऋग्वेदे) (सामवेदे)
मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ ॥ १ ॥ ७।१००।६
१६२६ प्र तत्ते अद्य शिपिविष्ट हव्यमर्यः शंसामि वयुनानि विद्वान् ।
तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके ॥२॥ ७।१००।५
१६२७ वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ।
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥३॥४(ते)॥
(धा० ४४ । उ० १ । स्व० ७) ७।१००।७

॥ इति प्रथमः खण्डः ॥ १ ॥

१६२८ वायो शुक्रो अयामि ते मध्वो अग्रं दिविष्टिषु ।
आ याहि सोमपीतये स्पार्हो देव नियुत्वता ॥ १ ॥ ४।४७।१
१६२९ इन्द्रश्च वायवेषां सोमानां पीतिमर्हथः ।
युवां हि यन्तीन्दवो निम्नमापो न सध्र्यक् ॥ २ ॥ ४।४७।२
१६३० वायविन्द्रश्च शुष्मिणा सरथं शवसस्पती ।
नियुत्वन्ता न ऊतय आ यातं सोमपीतये ॥ ३ ॥ ५ (ता) ॥
(धा० १९ । उ० १ । स्व० २) ४।४७।३

१६३१ अध क्षपा परिष्कृतो वाजाँ अभि प्र गाहसे ।
यदी विवस्वतो धियो हरिं हिन्वन्ति यातवे ॥ १ ॥ ९।९९।२
१६३२ तमस्य मर्जयामसि मदो य इन्द्रपातमः ।
यं गाव आसभिर्दधुः पुरा नूनं च सूरयः ॥ २ ॥ ९।९९।३
१६३३ तं गाथया पुराण्या पुनानमभ्यनूषत ।
उतो कृपन्त धीतयो देवानां नाम बिभ्रतीः ॥३॥ ६ (लु) ॥
(धा० १४ । उ० नास्ति । स्व० ५) ९।९९।४

१६३४ अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः ।
सम्राजन्तमध्वराणाम् ॥ १ ॥ १।२७।१

(ऋग्वेदे) (सामवेदे)

१६३५ स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः ।
मीढ्वाँ अस्माकं बभूयात् ॥ २ ॥ १।२७।२
१६३६ स नो दूराच्चासाच्च नि मर्त्यादघायोः ।
पाहि सदमिद्विश्वायुः ॥३॥ (धा० १३ । उ० १ । स्व० ३ ) ॥७(टि)॥ १।२७।३

१६३७ त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।
अशस्तिहा जनिता वृत्रतूरसि त्वं तूर्य तरुष्यतः ॥ १ ॥ ८।९९।५ ३११
१६३८ अनु ते शुष्मं तुरयन्तमीयतुः क्षोणी शिशुं न मातरा ।
विश्वास्ते स्पृधः श्नथयन्त मन्यवे वृत्रं यदिन्द्र तूर्वसि ॥२॥ ८ (टा)॥
( धा० १८ । उ० १ । स्व० २ ) ८।९९।६

॥ इति द्वितीयः खण्डः ॥ २ ॥

१६३९ यज्ञ इन्द्रमवर्धयद्यद्भूमिं व्यवर्तयत् ।
चक्राण ओपशं दिवि ॥ १ ॥ ८।१४।५ १२१
१६४० व्य३न्तरिक्षमतिरन्मदे सोमस्य रोचना ।
इन्द्रो यदभिनद्वलम् ॥ २ ॥ ८।१४।७
१६४१ उद्गा आजदङ्गिरोभ्य आविष्कृण्वन्गुहा सतीः ।
अर्वाञ्चं नुनुदे वलम् ॥३॥ (धा० २० । उ० १ । स्व०४) ॥९(पी)॥ ८।१४।८
१६४२ त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम् । आ च्यावयस्यूतये ॥१॥ ८।९२।७
१६४३ युध्मं सन्तमनर्वाणं सोमपामनपच्युतम् ।
नरमवार्यक्रतुम् ॥ २ ॥ ८।९२।८
१६४४ शिक्षा ण इन्द्र राय आ पुरु विद्वाँ ऋचीषम ।
अवा नः पार्ये धने ॥३॥ (धा० १४ । उ० १ । स्व० २) ॥१०(ता)॥ ८।९२।९

१६४५ तव त्यदिन्द्रियं बृहत्तव दक्षमुत क्रतुम् ।
वज्रं शिशाति धिषणा वरेण्यम् ॥ १ ॥ ८।१५।७

१६४६ तव द्यौरिन्द्र पौंस्यं पृथिवी वर्धति श्रवः । (ऋग्वेदे) (सामवेदे)
त्वामापः पर्वतासश्च हिन्विरे ॥ २ ॥ ८।१५।८
१६४७ त्वां विष्णुर्बृहन्क्षयो मित्रो गृणाति वरुणः ।
त्वां शर्द्धो मदत्यनु मारुतम् ॥३॥ (धा०१३। उ०२। स्व० ४)॥११(ठी)॥ ८।१५।९

॥ इति तृतीयः खण्डः ॥ ३ ॥

१६४८ नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः ।
अमैरमित्रमर्दय ॥ १ ॥ ८।७५।१० ११
१६४९ कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिम् ।
उरुकृदुरु णस्कृधि ॥ २ ॥ ८।७५।११
१६५० मा नो अग्ने महाधने परा वर्ग्भारभृद्यथा ।
संवर्गं सं रयिं जय ॥३॥ (धा० १५। उ० १। स्व० १ )॥१२(प)॥ ८।७५।१२

१६५१ समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः ।
समुद्रायेव सिन्धवः ॥ १ ॥ ८।६।४ १३७
१६५२ वि चिद्वृत्रस्य दोधतः शिरो बिभेद वृष्णिना ।
वज्रेण शतपर्वणा ॥ २ ॥ ८।६।६
१६५३ ओजस्तदस्य तित्विष उभे यत्समवर्तयत् ।
इन्द्रश्चर्मेव रोदसी ॥३॥ (धा०१४। उ० १। स्व० नास्ति) ॥१३(तौ)॥ ८।६।५

१६५४ सुमन्मा वस्वी रन्ती सूनरी ॥ १ ॥ (न ऋग्वेदीयः)
१६५५ सरूप वृषन्ना गहीमौ भद्रौ धुर्यावभि ।
ताविमा उप सर्पतः ॥ २ ॥ (न ऋग्वेदीयः)
१६५६ नीव शीर्षाणि मृढ्वं मध्य आपस्य तिष्ठति ।
शृङ्गेभिर्दशभिर्दिशन ॥३॥ (धा०७। उ० नास्ति। स्व० ३)॥१४(पि)॥ (न ऋग्वेदीयः)

॥ इति चतुर्थः खण्डः ॥ ४ ॥ इत्यष्टम-प्रपाठकस्य प्रथमोऽर्धः ॥ ८-१ ॥
॥ इति सप्तदशोऽध्यायः ॥ १७ ॥

# अथाष्टादशोऽध्यायः ।

[ २ ]

अथाष्टमप्रपाठके द्वितीयोऽर्धः ॥ ८-२ ॥

( १-१९ ) १ मेधातिथिः काण्वः प्रियमेधश्चाङ्गिरसः; २ श्रुतकक्षः सुकक्षो वा आङ्गिरसः; ३ शुनःशेप आजीगर्तिः; ४ शंयुर्बार्हस्पत्यः; ५ मेधातिथिः काण्वः; ६, ८ वसिष्ठो मैत्रावरुणिः; ७ वालखिल्यम् (आयुः काण्वः); ८ अम्बरिषो वार्षागिरः, ऋजिश्वा भारद्वाजश्च; १० विश्वमना वैयश्वः; ११ सोभरिः काण्वः; १२ सप्तर्षयः ( १ भरद्वाजो बार्हस्पत्यः, २ कश्यपो मारीचः, ३ गोतमो राहूगणः, ४ अत्रिर्भौमः, ५ विश्वामित्रो गाथिनः, ६ जमदग्निर्भार्गवः, ७ वासिष्ठो मैत्रावरुणिः ); १३ कलिः प्रागाथः; १४, १७ विश्वामित्रः प्रागाथः; १५ मेध्यातिथिः काण्वः, १६ निध्रुविः काश्यपः; १८ भरद्वाजो बार्हस्पत्यः ॥ १-२, ४, ६-७, ९-१०, १३, १५ इन्द्रः; ३, ११ १८ अग्निः; ५ विष्णुः, ५ (६) देवो वा; ८, १२, १६ पवमानः सोमः; १४, १७ इन्द्राग्नी ॥ १-५, १४ १६-१८ गायत्री; ६, ७, ९, १२, १३ प्रगाथः= (विषमा बृहती, समा सतोबृहती ); ८ अनुष्टुप् १० उष्णिक्, ११ काकुभः प्रगाथः= ( विषमा ककुप्, समा सतोबृहती ); १५ बृहती ॥

(ऋग्वेदे) (सामवेदे)

१६५७ पन्यंपन्यमित्सोतार आ धावत मद्याय ।
सोमं वीराय शूराय ॥ १ ॥ ८।२।२५ १२३

१६५८ एह हरी ब्रह्मयुजा शग्मा वक्षतः सखायम् ।
इन्द्रं गीर्भिर्गिर्वणसम् ॥ २ ॥ ८।२।२७

१६५९ पाता वृत्रहा सुतमा घा गमन्नारे अस्मत् ।
नि यमते शतमूतिः ॥३॥ (घा० १४ । उ० १ । स्व० ३) ॥ १ (ति) ८।२।२६

१६६० आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः ।
न त्वामिन्द्राति रिच्यते ॥ १ ॥ ८।९२।२२ १९७

१६६१ विव्यक्थ महिना वृषन्भक्षं सोमस्य जागृवे ।
य इन्द्र जठरेषु ते ॥ २ ॥ ८।९२।२३

१६६२ अरं त इन्द्र कुक्षये सोमो भवतु वृत्रहन् ।
अरं धामभ्य इन्दवः ॥३॥ ( धा० ११ । उ० १ । स्व० १ ) ॥२ (क)॥ ८।९२।२४

(ऋग्वेदे) (सामवेदे)

१६६३ जराबोध तद्विविड्ढि विशेविशे यज्ञियाय ।
स्तोमं रुद्राय दृशीकम् ॥ १ ॥ १।२७।१० १५

१६६४ स नो महाँ अनिमानो धूमकेतुः पुरुश्चन्द्रः ।
धिये वाजाय हिन्वतु ॥ २ ॥ १।२७।११

१६६५ स रेवाँ इव विश्पतिर्दैव्यः केतुः शृणोतु नः ।
उक्थैरग्निर्बृहद्भानुः ॥ ३ ॥ ( धा० ११ । उ० नास्ति । स्व० १ )॥३(ह)॥ १।२७।१२

१६६६ तद्वो गाय सुते सचा पुरुहूताय सत्वने ।
शं यद्गवे न शाकिने ॥ १ ॥ ६।४५।२२ ११५

१६६७ न घा वसुर्नि यमते दानं वाजस्य गोमतः ।
यत्सीमुपश्रवद्गिरः ॥ २ ॥ ६।४५।२३

१६६८ कुवित्सस्य प्र हि व्रजं गोमन्तं दस्युहा गमत् ।
शचीभिरप नो वरत् ॥ ३ ॥ (धा० १५ । उ० २ । स्व० ४) ॥४(फी)॥ ६।४५।२४

॥ इति प्रथमः खण्डः ॥ १ ॥

१६६९ इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् ।
समूढमस्य पांसुले ॥ १ ॥ १।२२।१७

१६७० त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः ।
अतो धर्माणि धारयन् ॥ २ ॥ १।२२।१८

१६७१ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
इन्द्रस्य युज्यः सखा ॥ ३ ॥ १।२२।१९

१६७२ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥ ४ ॥ १।२२।२०

१६७३ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते ।
विष्णोर्यत्परमं पदम् ॥ ५ ॥ १।२२।२१

(ऋग्वेदे) (सामवेदे)

१६७४ अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे ।
पृथिव्या अधि सानवि ॥६॥ ( धा० ३३ । उ० २ । स्व० ६) ॥५(दू)॥ १।२२।१६

१६७५ मो षु त्वा वाघतश्च नारे अस्मन्नि रीरमन् ।
आरात्ताद्वा सधमादं न आ गहीह वा सन्नुप श्रुधि ॥ १ ॥ ७।३२।१ २८४

१६७६ इमे हि ते ब्रह्मकृतः सु ते सचा मधौ न मक्ष आसते ।
इन्द्रे कामं जरितारो वसूयवो रथे न पादमा दधुः ॥ २ ॥६(डी)॥ ७।३२।२
( धा १३ । उ० ४ । स्व० ४ )

१६७७ अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत ।
पूर्वीर्ऋतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षत ॥ १ ॥ ८।५२।९

१६७८ समिन्द्रो रायो बृहतीरधूनुत सं क्षोणी समु सूर्यम् ।
सं शुक्रासः शुचयः सं गवाशिरः सोमा इन्द्रममन्दिषुः॥२॥७(ठा)॥ ८।५२।१०
( धा० १३ । उ० २ । स्व० २)

१६७९ इन्द्राय सोम पातवे वृत्रघ्ने परि षिच्यसे ।
नरे च दक्षिणावते वीराय सदनासदे ॥ १ ॥ ९।९८।१० १३३१

१६८० तं सखायः पुरूरुचं वयं यूयं च सूरयः ।
अश्याम वाजगन्ध्यं सनेम वाजपस्त्यम् ॥ २ ॥ ९।९८।१२

१६८१ परि त्यं हर्यतं हरिं [ बभ्रुं पुनन्ति वारेण ।
यो देवान्विश्वाँ इत्परि मदेन सह गच्छति ] ॥३॥ ८ (हा) ॥ ९।९८।७ १३२९ ५५२;
(धा० १६ । उ० नास्ति । स्व० २ )

१६८२ कस्तमिन्द्र त्वा वँस[वा मर्त्यो दधर्षति । (वँसो । आ)
श्रद्धा हि ते मघवन्पार्ये दिवि वाजी वाजं सिषासति] ॥ १ ॥ ७।३२।१४ २८०

१६८३ मघोनः स्म वृत्रहत्येषु चोदय ये ददति प्रिया वसु ।
तव प्रणीती हर्यश्व सूरिभिर्विश्वा तरेम दुरिता ॥ २ ॥ ९(यि)॥ ७।३२।१५
( धा० १७ । उ० नास्ति । स्व० ३ )

॥ इति द्वितीयः खण्डः ॥ २ ॥

१६८४ एदु मधोर्मदिन्तरं सिञ्चाध्वर्यो अन्धसः । (ऋग्वेदे) (सामवेदे)
एवा हि वीर स्तवते सदावृधः ॥ १ ॥ ८।२४।१६ ३८५
१६८५ इन्द्र स्थातर्हरीणां न किष्टे पूर्व्यस्तुतिम् ।
उदानंश शवसा न भन्दना ॥ २ ॥ ८।२४।१७
१६८६ तं वो वाजानां पतिमहूमहि श्रवस्यवः ।
अप्रायुभिर्यज्ञेभिर्वावृधेन्यम् ॥ ३ ॥ ॥१०(क)॥ ८।२४।१८
( धा० १६ । उ० १ । स्व० १ )

१६८७ तं गूर्धया स्वर्णरं देवासो देवमरतिं दधन्विरे ।
देवत्रा हव्यमूहिषे ॥ १ ॥ ८।१९।१ १०९
१६८८ विभूतरातिं विप्र चित्रशोचिषमग्निमीडिष्व यन्तुरम् ।
अस्य मेधस्य सोम्यस्य सोभरे प्रेमध्वराय पूर्व्यम् ॥२॥११(या)॥ ८।१९।२
( धा० १७ । उ० नास्ति । स्व० २ )

१६८९ आ सोम स्वानो अद्रिभिस्तिरो वाराण्यव्यया ।
जनो न पुरि चम्वोर्विशद्धरिः सदो वनेषु दध्रिषे ॥ १ ॥ ९।१०७।१० ५१३
१६९० स मामृजे तिरो अण्वानि मेष्यो मीढ्वांत्सप्तिर्न वाजयुः ।
अनुमाद्यः पवमानो मनीषिभिः सोमो विप्रेभिर्ऋक्वभिः ॥२॥१२(तु)॥
( धा० १४ । उ० १ । स्व० ५ । ) ९।१०७।११

१६९१ वयमेनमिदा ह्योऽपीपेमेह वज्रिणम् ।
तस्मा उ अद्य सवने सुतं भरा नूनं भूषत श्रुते ॥ १ ॥ ८।६६।७ २७२
१६९२ वृकश्चिदस्य वारण उरामथिरा वयुनेषु भूषति ।
सेमं न स्तोमं जुजुषाण आ गहीन्द्र प्र चित्रया धिया ॥२॥ १३(खा) ॥
( धा० १६ । उ० २ । स्व० २ ) ८।६६।८

१६९३ इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः ।
तद्वां चेति प्र वीर्यम् ॥ १ ॥ ३।१२।९

❀

(ऋग्वेदे) (सामवेदे)

१६९४ इन्द्राग्नी अपसस्परि [युप प्र यन्ति धीतयः ।
ऋतस्य पथ्या३ अनु] ॥ २ ॥ (स्परि । उप) ३।१२।७ १५७७

१६९५ इन्द्राग्नी तविषाणि वां [सधस्थानि प्रयांसि च ।
युवोरप्तूर्यं हितम्] ॥३॥ (धा० ६ । उ० १ । स्व० १ ) ॥ १४(क) ॥ ३।१२।८ १५७८

१६९६ क ईं वेद सुते सचा [पिबन्तं कद्वयो दधे ।
अयं यः पुरो विभिनत्योजसा मन्दानः शिप्र्यंधसः] ॥ १ ॥ ८।३३।७ २९१

१६९७ दाना मृगो न वारणः पुरुत्रा चरथं दधे ।
न किष्ट्वा नि यमदा सुते गमो महाँश्चरस्योजसा ॥ २ ॥ ८।३३।८

१६९८ य उग्रः सन्ननिष्टृतः स्थिरो रणाय संस्कृतः ।
यदि स्तोतुर्मघवा शृणवद्धवं नेन्द्रो योषत्या गमत् ॥३॥१५(ही)॥ ८।३३।९
( धा० ११ । उ० नास्ति । स्व० ४ )

॥ इति तृतीयः खण्डः ॥ ३ ॥

१६९९ पवमाना असृक्षत सोमाः शुक्रास इन्दवः ।
अभि विश्वानि काव्या ॥ १ ॥ ९।६३।२५

१७०० पवमाना दिवस्पर्यन्तरिक्षादसृक्षत ।
पृथिव्या अधि सानवि ॥ २ ॥ ९।६३।२७

१७०१ पवमानास आशवः शुभ्रा असृग्रमिन्दवः ।
घ्नन्तो विश्वा अप द्विषः ॥३॥ (धा० १५ । उ० २ । स्व० १)॥१६॥(फ)॥ ९।६३।२६

१७०२ तोशा वृत्रहणा हुवे सजित्वानापराजिता ।
इन्द्राग्नी वाजसातमा ॥ १ ॥ ३।१२।४

१७०३ प्र वामर्चन्त्युक्थिनो [नीथाविदो जरितारः ।
इन्द्राग्नी इष आ वृणे] ॥ २ ॥ (नेः ।) ३।१२।५ १५७५

१७०४ इन्द्राग्नी नवतिं पुरो [दासपत्नीरधूनुतम् । (×पुरः)
साकमेकेन कर्मणा] ॥३॥ (धा० ८ । उ० नास्ति । स्व० १) ॥१७(र)॥ ३।१२।६ १५७६

१७०५ उप त्वा रण्वसंदृशं प्रयस्वन्तः सहस्कृत ।
अग्ने ससृज्महे गिरः ॥ १ ॥ ६।१६।३७

१७०६ उप च्छायामिव घृणेरगन्म शर्म ते वयम् ।
अग्ने हिरण्यसंदृशः ॥ २ ॥ ६।१६।३८

१७०७ य उग्र इव शर्यहा तिग्मशृङ्गो न वंसगः ।
अग्ने पुरो रुरोजिथ ॥ ३ ॥ (धा० ७ । उ० नास्ति । स्व० १)॥१८(य)॥६।१६।३९

१७०८ ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् । (न ऋग्वेदीयः)
अजस्रं घर्ममीमहे ॥ १ ॥

१७०९ य इदं प्रतिपप्रथे यज्ञस्य स्वरुत्तिरन् ।
ऋतूनुत्सृजते वशी ॥ २ ॥ (न ऋग्वेदीयः)

१७१० अग्निः प्रियेषु धामसु कामो भूतस्य भव्यस्य ।
सम्राडेको विराजति ॥ ३ ॥ ( धा० ११ । उ० १ । स्व० २ ) ॥१९(का)॥ ( न ऋग्वेदीयः )

॥ इति चतुर्थः खण्डः ॥ ४ ॥

॥ इत्यष्टमप्रपाठके द्वितीयोऽर्धः ॥ ८-२ ॥

॥ इत्यष्टादशोऽध्यायः ॥ १८ ॥

# अथैकोनविंशोऽध्यायः।

[३]

अथ अथाष्टमप्रपाठके तृतीयोऽर्धः ॥ ८-३ ॥

(१--१८) १ विरूप आङ्गिरसः; २, १८ अवत्सारः काश्यपः; ३ विश्वामित्रो गाथिनः; ४ देवातिथिः काण्वः; ५,८,९,१६ गोतमो राहूगणः; ६ वामदेवो गौतमः, ७ प्रस्कण्वः काण्वः; १० वसुश्रुत आत्रेयः; ११ सत्यश्रवा आत्रेयः; १२ अवस्युरात्रेयः; १३ बुधगविष्ठिरावात्रेयौ; १४ कुत्स आङ्गिरसः; १५ अत्रिर्भौमः, १७ दीर्घतमा औचथ्यः ॥ १,१०,१३ अग्निः; २,१८ पवमानः सोमः; ३-५ इन्द्रः; ६,८,११,१४ (१ उत्तरार्धः रात्रिश्च), १६ उषाः; ७, ९, १२, १५, १७ अश्विनौ ॥ १-२, ६-७, १८ गायत्री; ३, १३-१५ त्रिष्टुप्; ४-५ प्रगाथः= ( विषमा बृहती, समा सतोबृहती ); ८-९ उष्णिक् १०-१२ पङ्क्तिः; १६, १७ जगती ॥

(ऋग्वेदे) (सामवेदे)

१७११ अग्निः प्रत्नेन जन्मना शुम्भानस्तन्व३ स्वाम्।
कविर्विप्रेण वावृधे ॥ १ ॥ ८।४४।१२

१७१२ ऊर्जो नपातमा हुवेऽग्निं पावकशोचिषम्।
अस्मिन्यज्ञे स्वध्वरे ॥ २ ॥ ८।४४।१३

१७१३ स नो मित्रमहस्त्वमग्ने शुक्रेण शोचिषा।
देवैरा सत्सि बर्हिषि ॥३॥ (धा० ९। उ० नास्ति। स्व० ४) ॥१(ली)। ८।४४।१४

१७१४ उत्ते शुष्मासो अस्थू रक्षो भिन्दन्तो अद्रिवः।
नुदस्व याः परिस्पृधः ॥ १ ॥ ९।५३।१

१७१५ अया निजघ्निरोजसा रथसङ्गे धने हिते।
स्तवा अबिभ्युषा हृदा ॥२॥ ९।५३।२

१७१६ अस्य व्रतानि नाधृषे पवमानस्य दूढ्या।
रुज यस्त्वा पृतन्यति ॥३॥ ९।५३।३

१७१७ तं हिन्वन्ति मदच्युतं हरिं नदीषु वाजिनम्।
इन्दुमिन्द्राय मत्सरम् ॥४॥ (धा० २०। उ० १। स्व० ४) ॥२(पी)॥ ९।५३।४

१७१८ आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः।
मा त्वा के चिन्नि येमुरिन्न पाशिनोऽति धन्वेव ताँ इहि ॥ १ ॥ ३।४५।१

१७१९ वृत्रखादो वलं रुजः पुरां दर्मो अपामजः। (ऋग्वेदे) (सामवेदे)
स्थाता रथस्य हर्योरभिस्वर इन्द्रो दृढा चिदारुजः ॥ २ ॥ ३।४५।२
१७२० गम्भीराँ उदधीँरिव क्रतुं पुष्यासि गा इव।
प्र सुगोपा यवसं धेनवो यथा ह्रदं कुल्या इवाशत ॥३॥ ३ (छा)॥
(धा० १७। उ० २। स्व० २) ३।४५।३

१७२१ यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम्।
आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब ॥ १ ॥ ८।४।३ २५२
१७२२ मन्दन्तु त्वा मघवन्निन्द्रेन्दवो राधोदेयाय सुन्वते।
आमुष्या सोममपिबश्चमू सुतं ज्येष्ठं तदधिषे सहः ॥२॥४(घ)॥ ८।४।४
(धा० २१। उ० ४। स्व० १)

१७२३ त्वमङ्ग प्र शंसिषो देवः शविष्ठ मर्त्यम्।
न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥ १ ॥ १।८४।१९ २४७
१७२४ मा ते राधांसि मा त ऊतयो वसोऽस्मान्कदा चना दभन्।
विश्वा च न उपमिमीहि मानुष वसूनि चर्षणिभ्य आ ॥२॥५(का)॥
(धा० २१। उ० १। स्व० २) १।८४।२०

॥ इति प्रथमः खण्डः ॥ १ ॥

१७२५ प्रति ष्या सूनरी जनी व्युच्छन्ती परि स्वसुः।
दिवो अदर्शि दुहिता ॥ १ ॥ ४।५२।१
१७२६ अश्वेव चित्रारुषी माता गवामृतावरी।
सखा भूदश्विनोरुषाः ॥ २ ॥ ४।५२।२
१७२७ उत सखास्यश्विनोरुत माता गवामसि।
उतोषो वस्व ईशिषे ॥३॥ (धा०९। उ० नास्ति। स्व० ३)॥६(लि)॥ ४।५२।३
१७२८ एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः।
स्तुषे वामश्विना बृहत् ॥ १ ॥ १।४६।१

(ऋग्वेदे) (सामवेदे)

१७२९ या दस्रा सिन्धुमातरा मनोतरा रयीणाम् ।
धिया देवा वसुविदा ॥ २ ॥ १।४६।२

१७३० वच्यन्ते वां ककुहासो जूर्णायामधि विष्टपि ।
यद्वां रथो विभिष्पतात् ॥३॥ (धा०१४ । उ० नास्ति। स्व०३) ॥७(लि)॥ १।४६।३

१७३१ उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति ।
येन तोकं च तनयं च धामहे ॥ १ ॥ १।९२।१३

१७३२ उषो अद्येह गोमत्यश्वावति विभावरि ।
रेवदस्मे व्युच्छ सूनृतावति ॥ २ ॥ १।९२।१४

१७३३ युंक्ष्वा हि वाजिनीवत्यश्वाँ अद्यारुणाँ उषः ।
अथा नो विश्वा सौभगान्या वह ॥ ३ ॥ ८ (हि) ॥ १।९२।१५
( धा० ६ । उ० ना० । स्व० ३ )

१७३४ अश्विना वर्तिरस्मदा गोमद्दस्रा हिरण्यवत् ।
अर्वाग्रथं समनसा नि यच्छतम् ॥ १ ॥ १।९२।१६

१७३५ एह देवा मयोभुवा दस्रा हिरण्यवर्तनी ।
उषर्बुधो वहन्तु सोमपीतये ॥ २ ॥ १।९२।१८

१७३६ यावित्था श्लोकमा दिवो ज्योतिर्जनाय चक्रथुः ।
आ न ऊर्जं वहतमश्विना युवम् ॥ ३ ॥ ९ (भा) ॥ १।९२।१७
( धा० २० । उ० ४ । स्व० २ )

॥ इति द्वितीयः खण्डः ॥२॥

१७३७ अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।
अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिन इषं स्तोतृभ्य आ भर ॥१॥ ४२५

१७३८ अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः । ५।६।१
अग्नी राये स्वाभुवं स प्रीतो याति वार्यमिषं स्तोतृभ्य आ भर ॥२॥ ५।६।२

१७३९ सो अग्निर्यो वसुर्गृणे सं यमायन्ति धेनवः । (ऋग्वेदे) (सामवेदे)
समर्वन्तो रघुद्रुवः सं सुजातासः सूरय इषं स्तोतृभ्य आ भर ॥३॥१०(घु)॥
(धा० १६ । उ० ४ । स्व० ५) ५।६।२

१७४० महे नो अद्य बोधयोषो राये दिवित्मती ।
यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥१॥ ५।७९।१ ४२१
१७४१ या सुनीथे शौचद्रथे व्यौच्छो दुहितर्दिवः ।
सा व्युच्छ सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥२॥ ५।७९।२
१७४२ सा नो अद्याभरद्वसुर्व्युच्छा दुहितर्दिवः ।
यो व्यौच्छः सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥३(तु)११॥
( धा० १९ । उ० १ । स्व० ५ ) ५।७९।३

१७४३ प्रति प्रियतमं रथं वृषणं वसुवाहनम् ।
स्तोता वामश्विनावृषि स्तोमेभिर्भूषति प्रति माध्वी मम श्रुतं हवम् ॥ १ ॥
५।७५।१ ४१८
१७४४ अत्यायातमश्विना तिरो विश्वा अहं सना ।
दस्रा हिरण्यवर्तनी सुषुम्णा सिन्धुवाहसा माध्वी मम श्रुतं हवम् ॥ २ ॥
५।७५।२
१७४५ आ नो रत्नानि बिभ्रतावश्विना गच्छतं युवम् ।
रुद्रा हिरण्यवर्तनी जुषाणा वाजिनीवसू माध्वी मम श्रुतं हवम् ॥३॥(वा)१२॥
( धा० ३० । उ० नास्ति । स्व० २ ) ५।७५।३

॥ इति तृतीयः खण्डः ॥ ३ ॥

१७४६ अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।
यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सस्रते नाकमच्छ ॥१॥ ५।१।१ ७३
१७४७ अबोधि होता यजथाय देवानूर्ध्वो अग्निः सुमनाः प्रातरस्थात् ।
समिद्धस्य रुशददर्शि पाजो महान् देवस्तमसो निरमोचि ॥२॥ ५।१।२

१७४८ यदीं गणस्य रशनामजीगः शुचिरङ्क्ते शुचिभिर्गोभिरग्निः । (ऋग्वेदे) (सामवेदे)
आद्दक्षिणा युज्यते वाजयन्त्युत्तानामूर्ध्वो अधयज्जुहूभिः ॥३॥१३(लि)॥
(धा० १९ । उ० नास्ति । स्व० ३) ५।१।३

१७४९ इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा ।
यथा प्रसूता सवितुः सवायैवा रात्र्युषसे योनिमारैक् ॥ १ ॥ १।११३।१
१७५० रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः ।
समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने ॥ २ ॥ १।११३।२
१७५१ समानो अध्वा स्वस्रोरनंतस्तमन्यान्या चरतो देवशिष्टे ।
न मेथेते न तस्थतुः सुमेके नक्तोषासा समनसा विरूपे ॥३॥१४(म)॥
( धा० ३० । उ० ५ । स्व० १ ) १।११३।३

१७५२ आ भात्यग्निरुषसामनीकमुद्विप्राणां देवया वाचो अस्थुः ।
अर्वाञ्चा नूनं रथ्येह यातं पीपिवांसमश्विना घर्ममच्छ ॥१॥ ५।७६।१
१७५३ न संस्कृतं प्र मिमीतो गमिष्ठान्ति नूनमश्विनोपस्तुतेह ।
दिवाभिपित्वेऽवसागमिष्ठा प्रत्यवर्तिं दाशुषे शम्भविष्ठा ॥२॥ ५।७६।२
१७५४ उता यातं संगवे प्रातरह्नो मध्यन्दिन उदिता सूर्यस्य ।
दिवा नक्तमवसा शन्तमेन नेदानीं पीतिरश्विना ततान ॥३॥१५(लो)॥
( धा० २४ । उ० नास्ति । स्व० ९ ) ५।७६।३

॥ इति चतुर्थः खण्डः ॥ ४ ॥

१७५५ एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते ।
निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ॥१॥
१।९२।१
१७५६ उदपप्तन्नरुणा भानवो वृथा स्वायुजो अरुषीर्गा अयुक्षत ।
अक्रन्नुषासो वयुनानि पूर्वथा रुशन्तं भानुमरुषीरशिश्रयुः ॥ २ ॥ १।९२।२

१७५७ अर्चन्ति नारीरपसो न विष्टिभिः समानेन योजनेना परावतः । (ऋग्वेदे)(सामवेदे)
इषं वहन्तीः सुकृते सुदानवे विश्वेदह यजमानाय सुन्वते ॥३॥१६(कि)॥
( धा० २६ । उ० १ । स्व० ३ )  १।९२।३

१७५८ अबोध्यग्निर्ज्म उदेति सूर्यो व्युषाश्चन्द्रा मह्यावो अर्चिषा ।
आयुक्षातामश्विना यातवे रथं प्रासावीद्देवः सविता जगत्पृथक् ॥ १ ॥
१।१५७।१

१७५९ यद्युञ्जाथे वृषणमश्विना रथं घृतेन नो मधुना क्षत्रमुक्षतम् ।
अस्माकं ब्रह्म पृतनासु जिन्वतं वयं धना शूरसाता भजेमहि ॥ २ ॥
१।१५७।२

१७६० अर्वाङ् त्रिचक्रो मधुवाहनो रथो जीराश्वो अश्विनोर्यातु सुष्टुतः ।
त्रिवन्धुरो मघवा विश्वसौभगः शं न आ वक्षद्द्विपदे चतुष्पदे ॥३॥१७(छा)॥
(धा० २२ । उ० २ । स्व० २) १।१५७।३

१७६१ प्र ते धारा असश्चतो दिवो न यन्ति वृष्टयः ।
अच्छा वाजं सहस्रिणम् ॥ १ ॥  ९।५७।१

१७६२ अभि प्रियाणि काव्या विश्वा चक्षाणो अर्षति ।
हरिस्तुञ्जान आयुधा ॥ २ ॥  ९।५७।२

१७६३ स मर्मृजान आयुभिरिभो राजेव सुव्रतः ।
श्येनो न वंसु षीदति ॥ ३ ॥  ९।५७।३

१७६४ स नो विश्वा दिवो वसूतो पृथिव्या अधि ।
पुनान इन्दवा भर ॥४॥ (धा० १४ । उ० १। स्व० ४) ॥१८(ती)॥  ९।५७।४

॥ इति पञ्चमः खण्डः ॥५॥

॥ इति अष्टमप्रपाठके तृतीयोऽर्धः, अष्टमप्रपाठकश्च समाप्तः ॥८ ॥

॥ इत्येकोनविंशोऽध्यायः ॥ १९ ॥

# अथ विंशोऽध्यायः ।

[ १ ]

अथ नवमप्रपाठके प्रथमोऽर्धः ॥ ९-१ ॥

( १-१८ ) १ नृमेध आङ्गिरसः; २ … ३ प्रियमेध आङ्गिरसः; ४ दीर्घतमा औचथ्यः; ५ वामदेवो गौतमः; ६ प्रस्कण्वः काण्वः; ७ बृहदुक्थो वामदेव्यः; ८ बिन्दुः पूतदक्षो वा आंगिरसः; ९,१७ जमदग्निर्भार्गवः; १० सुकक्ष आंगिरसः; ११-१३ वसिष्ठो मैत्रावरुणिः; १४ सुदाः पैजवनः; १५ मेधातिथिः काण्वः; १६ नीपातिथिः काण्वः;१८ परुच्छेपो दैवोदासिः॥ १, १७ पवमानः सोमः; ३, ७, १०, १६ इन्द्रः; ४-६, १८ अग्निः; ९ मरुतः; १० सूर्यः; २…… ॥ १, ८, १०, १५-१७ गायत्री; ( १७ नित्यपदा ) २……; ३ अनुष्टम्मुखा प्रगाथः= (१ अनुष्टुप्+गायत्र्यौ ); ४, ११, १३ विराट्; ५ पदपंक्तिः; ६, ९, १२ प्रगाथः ( विषमा बृहती, समा सतो-बृहती ); ७ त्रिष्टुप् ; १४ शक्करी; १८ अत्यष्टिः ॥

१७६५ प्रास्य धारा अक्षरन्वृष्णः सुतस्यौजसः । (ऋग्वेदे)(सामवेदे)
देवाँ अनु प्रभूषतः ॥ १ ॥ ९।२९।१

१७६६ सप्तिं मृजन्ति वेधसो गृणन्तः कारवो गिरा ।
ज्योतिर्जज्ञानमुक्थ्यम् ॥ २ ॥ ९।२९।२

१७६७ सुषहा सोम तानि ते पुनानाय प्रभूवसो ।
वर्धा समुद्रमुक्थ्य ॥३॥ (धा० १२ । उ० नास्ति । स्व०३) ॥१(यि)॥ ९।२९।३

१७६८ एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे ॥ १ ॥ (न ऋग्वेदीयः) ४३८

१७६९ त्वामिच्छवसस्पते यन्ति गिरो न संयतः ॥ २ ॥ (न ऋग्वेदीयः)

१७७० वि स्रुतयो यथा पथा [इन्द्र त्वद्यन्तु रातयः] ॥ ३ ॥ २ (प) ॥ (न ऋग्वेदीयः) ४५३
( धा० ५ । उ० १ । स्व० १ )

१७७१ आ त्वा रथं यथोतये [सुम्नाय वर्तयामसि ।
तुविकूर्मिमृतीषहमिन्द्रं शविष्ठ सत्पतिम्] ॥ १ ॥

१७७२ तुविशुष्म तुविक्रतो शचीवो विश्वया मते । ८।६८।१ ३५४
आ पप्राथ महित्वना ॥ २ ॥

८।६८।२

१७७३ यस्य ते महिना महः परि ज्मायन्तमीयतुः ।        (ऋग्वेदे) (सामवेदे)
हस्ता वज्रं हिरण्ययम् ॥३॥ (धा०१० । उ० नास्ति । स्व०१) ॥३(व)॥ ८।६८।३
१७७४ आ यः पुरं नार्मिणीमदीदेदत्यः कविर्नभन्यो३ नार्वा ।
सूरो न रुरुक्वाञ्छतात्मा ॥ १ ॥        १।१४९।३
१७७५ अभि द्विजन्मा त्री रोचनानि विश्वा रजांसि शुशुचानो अस्थात् ।
होता यजिष्ठो अपां सधस्थे ॥ २ ॥        १।१४९।४
१७७६ अयं स होता यो द्विजन्मा विश्वा दधे वार्याणि श्रवस्या ।
मर्तो यो अस्मै सुतुको ददाश ॥ ३ ॥ ४ (छ) ॥        १।१४९।५
(धा० १२ । उ० २ । स्व० १)
१७७७ अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशम् ।
ऋध्यामा त ओहैः ॥ १ ॥        [illegible]
१७७८ अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः ।
रथीर्ऋतस्य बृहतो बभूथ ॥ २ ॥        [illegible]
१७७९ एभिर्नो अर्कैर्भवा नो अर्वाङ्क्स्व३र्ण ज्योतिः ।
अग्ने विश्वेभिः सुमना अनीकैः ॥ ३ ॥ ५ ( चि ) ॥        [illegible]
( धा० ७ । उ० १ । स्व० ३ )

॥ इति प्रथमः खण्डः ॥ १ ॥

१७८० अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य ।
आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः ॥ १ ॥        १।४४।१   ४०
१७८१ जुष्टो हि दूतो असि हव्यवाहनोऽग्ने रथीरध्वराणाम् ।
सजूरश्विभ्यामुषसा सुवीर्यमस्मे धेहि श्रवो बृहत् ॥२॥६(ला)॥
( धा० ९ । उ० नास्ति । स्व० २ ) १।४४।२
१७८२ विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगार ।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान ॥ १ ॥        १०।५५।५   ३९५

१७८३ शाक्मना शाको अरुणः सुपर्ण आ यो महः शूरः सनादनीडः।(ऋग्वेदे)(सामवेदे)
यच्चिकेत सत्यमित्तन्न मोघं वसु स्पार्हमुत जेतोत दाता ॥२॥ १०।५५।६

१७८४ ऐभिर्ददे वृष्ण्या पौंस्यानि येभिरौक्षद्वृत्रहत्याय वज्री।
ये कर्मणः क्रियमाणस्य मह्न ऋतेकर्ममुदजायन्त देवाः ॥३॥७(घे)॥
(धा० ३१। उ० ४। स्व० ७) १०।५५।७

१७८५ अस्ति सोमो अयं सुतः पिबन्त्यस्य मरुतः।
उत स्वराजो अश्विना ॥ १ ॥ ८।९४।४ १७४

१७८६ पिबन्ति मित्रो अर्यमा तना पूतस्य वरुणः।
त्रिषधस्थस्य जावतः ॥ २ ॥ ८।९४।५

१७८७ उतो न्वस्य जोषमा इन्द्रः सुतस्य गोमतः।
प्रातर्होतेव मत्सति ॥३॥ (धा० ९। उ० नास्ति। स्व० ४) ॥८(ली)॥ ८।९४।६

१७८८ बण्महाँ असि सूर्य बडादित्य महाँ असि।
महस्ते सतो महिमा पनिष्टम मह्ना देव महाँ असि ॥ १ ॥ ८।१०१।११ २७६

१७८९ बट् सूर्य श्रवसा महाँ असि सत्रा देव महाँ असि।
मह्ना देवानामसुर्यः पुरोहितो विभु ज्योतिरदाभ्यम् ॥२॥९(त)॥
(धा० १४। उ० १। स्व० १) ८।१०१।१२

॥ इति द्वितीयः खण्डः ॥ २ ॥

१७९० उप नो हरिभिः सुतं याहि मदानां पते।
उप नो हरिभिः सुतम् ॥ १ ॥ ८।९३।३१ १५०

१७९१ द्विता यो वृत्रहन्तमो विद इन्द्रः शतक्रतुः
उप नो हरिभिः सुतम् ॥ २ ॥ ८।९३।३२

१७९२ त्वं हि वृत्रहन्नेषां पाता सोमानामसि।
उप नो हरिभिः सुतम् ॥३॥(धा०१३। उ० नास्ति। स्व० ४) ॥१०(री)॥ ८।९३।३३

१७९३ प्र वो महे महेवृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम्।
विशः पूर्वीः प्र चर चर्षणिप्राः ॥ १ ॥ ७।३१।१० ३२८

१७९४ उरुव्यचसे महिने सुवृक्तिमिन्द्राय ब्रह्म जनयन्त विप्राः । (ऋग्वेदे)(सामवेदे)
तस्य व्रतानि न मिनन्ति धीराः ॥ २ ॥ ७।३१।११
१७९५ इन्द्रं वाणीरनुत्तमन्युमेव सत्रा राजानं दधिरे सहध्यै ।
हर्यश्वाय बर्हया समापीन् ॥ ३ ॥ ॥ ११ ( हि ) ॥ ७।३१।१२
( धा० २६ । उ० नास्ति । स्व० ३ )

१७९६ यदिन्द्र यावतस्त्वमेतावदहमीशीय ।
स्तोतारमिद्दधिषे रदावसो न पापत्वाय रंसिषम् ॥ १ ॥ ७।३२।१८ ३१०
१७९७ शिक्षेयमिन्महयते दिवेदिवे राय आ कुहचिद्विदे ।
न हि त्वदन्यन्मघवन्न आप्यं वस्यो अस्ति पिता च न ॥३॥१२(ता)॥
( धा० १४ । उ० १ । स्व० २ ) ७।३२।१९

१७९८ श्रुधी हवं विपिपानस्याद्रेर्बोधा विप्रस्यार्चतो मनीषाम् ।
कृष्वा दुवांस्यन्तमा सचेमा ॥ १ ॥ ७।२२।४
१७९९ न ते गिरो अपि मृष्ये तुरस्य न सुष्टुतिमसुर्यस्य विद्वान् ।
सदा ते नाम स्वयशो विवक्मि ॥ २ ॥ ७।२२।५
१८०० भूरि हि ते सवना मानुषेषु भूरि मनीषी हवते त्वामित् ।
मारे अस्मन्मघवं ज्योक्कः ॥३॥ ( धा० १५ । उ० ३ । स्व० २) ॥१३(बा)॥ ७।२२।६

॥ इति तृतीयः खण्डः ॥ ३ ॥

१८०१ प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत ।
अभीके चिदु लोककृत्सङ्गे समत्सु वृत्रहा ।
अस्माकं बोधि चोदिता नभन्तामन्यकेषां
ज्याका अधि धन्वसु ॥ १ ॥ १०।१३३।१
१८०२ त्वं सिंधूँरवासृजोऽधराचो अहन्नहिम् ।
अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यासि वार्यम् ।
तं त्वा परि ष्वजामहे नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥२॥ १०।१३३।२

१८०३ वि षु विश्वा अरातयोऽर्यो नशन्त नो धियः । (ऋग्वेदे)(सामवेदे)
अस्तासि शत्रवे वधं यो न इन्द्र जिघांसति ।
या ते रातिर्ददिर्वसु नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥३॥(हि)१४॥
( धा० ४३ । उ० ६ । स्व० ३ ) १०।१३३।३

१८०४ रेवाँ इद्रेवत स्तोता स्यात्त्वावतो मघोनः ।
प्रेदु हरिवः सुतस्य ॥ १ ॥ ८।२।१३
१८०५ उक्थं च न शस्यमानं नागो रयिरा चिकेत ।
न गायत्रं गीयमानम् ॥२॥ ८।२।१४ २२५
१८०६ मा न इन्द्र पीयत्नवे मा शर्धते परा दाः ।
शिक्षा शचीवः शचीभिः ॥३॥ (धा० १४ । उ० १ । स्व० ३) ॥१५(ति)॥ ८।२।१५
१८०७ एन्द्र याहि हरिभिरुप कण्वस्य सुष्टुतिम् ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ १ ॥ ८।३४।१ ३४८
१८०८ अत्रा वि नेमिरेषामुरां न धूनुते वृकः ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ २ ॥ ८।३४।३
१८०९ आ त्वा ग्रावा वदन्निह सोमी घोषेण वक्षतु ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥३॥१६(व)॥ ८।३४।२
(धा० ५ । उ० नास्ति । स्व० १)
१८१० पवस्व सोम मन्दयन्निन्द्राय मधुमत्तमः ॥ १ ॥
१८११ ते सुतासो विपश्चितः शुक्रा वायुमसृक्षत ॥ २ ॥ ९।६७।१६
१८१२ असृग्रं देववीतये वाजयन्तो रथा इव ॥३॥१७(रौ)॥ ९।६७।१८
९।६७।१७
( धा० ८ । उ० नास्ति । स्व० नास्ति )

॥ इति चतुर्थः खण्डः ॥ ४ ॥

१८१३ अग्निं होतारं मन्ये दास्वन्तं वसोः सूनुं
सहसो जातवेदसं विप्रं न जातवेदसम् ।
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।
घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः ॥१॥ १।१२७।१ ४६५

१८१४ यजिष्ठं त्वा यजमाना हुवेम ज्येष्ठमङ्गिरसां विप्र (ऋग्वेदे)(सामवेदे)
मन्मभिर्विप्रेभिः शुक्र मन्मभिः ।
परिज्मानमिव द्यां होतारं चर्षणीनाम् ।
शोचिष्केशं वृषणं यमिमा विशः प्रावन्तु जूतये विशः ॥२॥ १।१२७।२

१८१५ स हि पुरु चिदोजसा विरुक्मता दीद्यानो
भवति द्रुहन्तरः परशुर्न द्रुहन्तरः ।
वीडु चिद्यस्य समृतौ श्रुवद्वनेव यत्स्थिरम् ।
निष्षहमाणो यमते नायते धन्वासहा नायते ॥३॥१८(ठी)॥ १।१२७।३

( धा० ४३ । उ० २ । स्व० ४ )

॥ इति नवमप्रपाठके प्रथमोऽर्धः ॥ ९-१ ॥

[२]

अथ नवमप्रपाठके द्वितीयोऽर्धः ॥ ९-२ ॥

(१-१३) १ अग्निः पावकः; २ सोभरिः काण्वः; ३ अरुणो वैतहव्यः; ५-६ अवत्सारः काश्यपः; ९ गोषूक्त्यश्वसूक्तिनौ काण्वायनौ; १० त्रिशिरास्त्वाष्ट्रः, सिन्धुद्वीप आम्बरीषो वा; ११ उलो वातायनः, १३ वेनो भार्गवः; ४, ७, ८, १२ । १-४; ७-८, १२ अग्निः; ५-६ विश्वे देवाः; ९ इन्द्रः; १० आपः; ११ वायुः १३ वेनः १ (१-२) विष्टारपंक्तिः, १ (३-५) सतोबृहती, १ (६) उपरिष्टाज्ज्योतिः, २ काकुभः प्रगाथः=(विषमा ककुप्, समा सतोबृहती); ३ जगती; ५-६, १३ त्रिष्टुप्; ४,७,-११ गायत्री; ४, ७, ८, १२ ।

१८१६ अग्ने तव श्रवो वयो महि भ्राजन्ते अर्चयो विभावसो ।
बृहद्भानो शवसा वाजमुक्थ्यं दधासि दाशुषे कवे ॥१॥ १०।१४०।१

१८१७ पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना ।
पुत्रो मातरा विचरन्नुपावसि पृणक्षि रोदसी उभे ॥२॥ १०।१४०।२

१८१८ ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मन्दस्व धीतिभिर्हितः ।
त्वे इषः सं दधुर्भूरिवर्पसश्चित्रोतयो वामजाताः ॥३॥ १०।१४०।३

२५

(ऋग्वेदे) (सामवेदे)

१८१९ इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य ।
स दर्शतस्य वपुषो वि राजसि पृणक्षि दर्शतं क्रतुम् ॥४॥ १०।१४०।४

१८२० इष्कर्तारमध्वरस्य प्रचेतसं क्षयन्तं राधसो महः ।
रातिं वामस्य सुभगां महीमिषं दधासि सानसिं रयिम् ॥५॥ १०।१४०।५

१८२१ ऋतावानं महिषं विश्वदर्शतमग्निं सुम्नाय दधिरे पुरो जनाः ।
श्रुत्कर्णं सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा ॥६॥१(दि)॥ १०।१४०।६
( धा० ५९ । उ० ३ । स्व० ३ )

॥ इति पञ्चमः खण्डः ॥ ५ ॥

१८२२ प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्मभिः ।
यस्य त्वं सख्यमाविथ ॥१॥ ८।१९।३० १०८

१८२३ तव द्रप्सो नीलवान्वाश ऋत्विय इन्धानः सिष्णवा ददे ।
त्वं महीनामुषसामसि प्रियः क्षपो वस्तुषु राजसि ॥२॥२(यी)॥ ८।१९।३१
( धा० १२ । उ० नास्ति । स्व० ४ )

१८२४ तमोषधीर्दधिरे गर्भमृत्वियं तमापो अग्निं जनयन्त मातरः ।
तमित्समानं वनिनश्च वीरुधोऽन्तर्वतीश्च सुवते च विश्वहा ॥१॥३(रि)॥
( धा० १३ । उ० नास्ति । स्व० ३ ) १०।९१।६

१८२५ अग्निरिन्द्राय पवते दिवि शुक्रो वि राजति ।
महिषीव वि जायते ॥१॥ (धा० ७ । उ० नास्ति । स्व० २) ४ (या)॥ (न ऋग्वेदीयः)

१८२६ यो जागार तमृचः कामयन्ते यो जागार तमु सामानि यन्ति ।
यो जागार तमयं सोम आह तवाहमस्मि सख्ये न्योकाः ॥५(या)॥
( धा० ७ । उ० नास्ति । स्व० २ ) ५।४४।१४

१८२७ अग्निर्जागार तमृचः कामयन्तेऽग्निर्जागार तमु सामानि यन्ति ।
अग्निर्जागार तमयं सोम आह तवाहमस्मि सख्ये न्योकाः ॥६(वा)॥
( धा० १० । उ० नास्ति । स्व० २ ) ५।४४।१५

१८२८ नमः सखिभ्यः पूर्वसद्भ्यो नमः साकंनिषेभ्यः । (ऋग्वेदे) (सामवेदे)
युञ्जे वाचं शतपदीम् ॥ १ ॥ (न ऋग्वेदीयः)
१८२९ युञ्जे वाचं शतपदीं गाये सहस्रवर्तनि ।
गायत्रं त्रैष्टुभं जगत् ॥ २ ॥ (न ऋग्वेदीयः)
१८३० गायत्रं त्रैष्टुभं जगद्विश्वा रूपाणि सम्भृता ।
देवा ओकांसि चक्रिरे ॥३॥( धा० १२ । उ० नास्ति । स्व० ५)॥७(यु)॥(न ऋग्वेदीयः)

१८३१ अग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्ज्योतिरिन्द्रः ।
सूर्यो ज्योतिर्ज्योतिः सूर्यः ॥ १ ॥ (न ऋग्वेदीयः)
१८३२ पुनरूर्जा नि वर्तस्व पुनरग्न इषायुषा ।
पुनर्नः पाह्यंहसः ॥ २ ॥ (न ऋग्वेदीयः)
१८३३ सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया ।
विश्वप्स्न्या विश्वतस्परि ॥ ३ ॥ ( धा० ८ । उ० २ । स्व० २ ) ॥८(ठा)॥(न ऋग्वेदीयः)

॥ इति षष्ठः खण्डः ॥ ६ ॥

१८३४ यदिन्द्राहं यथा त्वमीशीय वस्व एक इत् ।
स्तोता मे गोसखा स्यात् ॥ १ ॥ ८।१४।१ १२२
१८३५ शिक्षेयमस्मै दित्सेयं शचीपते मनीषिणे ।
यदहं गोपतिः स्याम् ॥ २ ॥ ८।१४।२
१८३६ धेनुष्ट इन्द्र सूनृता यजमानाय सुन्वते ।
गामश्वं पिप्युषी दुहे ॥ ३ ॥(धा० १५ । उ० १ । स्व० ३)॥९(पि)॥ ८।१४।३

१८३७ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।
महे रणाय चक्षसे ॥ १ ॥ १०।९।१
१८३८ यो वः शिवतमो रसस्तस्य भाजयतेह नः ।
उशतीरिव मातरः ॥ २ ॥ १०।९।२

(ऋग्वेदे) (सामवेदे)

१८३९ तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः ॥३॥( धा० १० । उ० नास्ति । स्व० २)॥१०(वा)॥ १०।९।३

१८४० वात आ वातु भेषजं शम्भु मयोभु नो हृदे ।
प्र न आयूंषि तारिषत् ॥ १ ॥ १०।१८६।१ १८७

१८४१ उत वात पितासि न उत भ्रातोत नः सखा ।
स नो जीवातवे कृधि ॥ २ ॥ १०।१८६।२

१८४२ यददो वात ते गृहे३ऽमृतं निहितं गुहा ।
तस्य नो धेहि जीवसे ॥३॥ (धा० १० । उ० १ । स्व० नास्ति) ॥११(पौ)॥ १०।१८६।३

१८४३ अभि वाजी विश्वरूपो जनित्रं हिरण्ययं बिभ्रदत्कं सुपर्णः ।
सूर्यस्य भानुमृतुथा वसानः परि स्वयं मेधमृज्रो जजान ॥ १ ॥ (न ऋग्वेदीयः)

१८४४ अप्सु रेतः शिश्रिये विश्वरूपं तेजः पृथिव्यामधि यत्संबभूव ।
अन्तरिक्षे स्वं महिमानं मिमानः कनिक्रन्ति वृष्णो अश्वस्य रेतः ॥ २ ॥
(न ऋग्वेदीयः)

१८४५ अयं सहस्रा परि युक्ता वसानः सूर्यस्य भानुं यज्ञो दाधार ।
सहस्रदाः शतदा भूरिदावा धर्ता दिवो भुवनस्य विश्पतिः ॥३॥१२(पु)॥
( धा० २० । उ० १ । स्व० ५) (न ऋग्वेदीयः)

१८४६ नाके सुपर्णमुप यत्पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा ।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥ १ ॥ १०।१२३।६ ३२०

१८४७ ऊर्ध्वो गन्धर्वो अधि नाके अस्थात्प्रत्यङ्चित्रा बिभ्रदस्यायुधानि ।
वसानो अत्कं सुरभिं दृशे कं स्वा३र्ण नाम जनत प्रियाणि ॥२॥ १०।१२३।७

१८४८ द्रप्सः समुद्रमभि यज्जिगाति पश्यन् गृध्रस्य चक्षसा विधर्मन् ।
भानुः शुक्रेण शोचिषा चकानस्तृतीये चक्रे रजसि प्रियाणि ॥१३(खु)॥
( धा० २६ । उ० २ । स्व० ५ ) १०।१२३।८

॥ इति सप्तमः खण्डः ॥ ७ ॥ इति नवमप्रपाठकस्य द्वितीयोऽर्धः ॥९-२॥

॥ इति विंशोऽध्यायः ॥ २० ॥

